ातैः पितरौ रोहिणीमपि नारद । नेत्रान्तसूचितेनैव विनयेन प्रियां तथा ॥ ८७
तद्यथायोग्यं व्रजौकोभिः प्रपूजितः । गवालये तथा गाश्च संप्रवेश्य समन्ततः ॥ ८८
ार्थितो याति भ्रात्रा सह निजालयम् । स्नात्वा पीत्वा तत्र किंचिद्भुक्त्वा मात्राऽनुमोदितः
यं पुनर्याति दोग्धुकामो गवां पयः । ताश्च दुग्ध्वा दोहयित्वा पाययित्वा च काश्चन ९०
सार्धं गृहं याति तत्र भावशतानुगः । तत्र पित्रा पितृव्यैश्च तत्पुत्रैश्च बलेन च ॥ ९१
कि विविधान्नानि चर्व्यचोष्यादिकानि च । तन्मातिः प्रार्थनात्पूर्वं राधिकाऽपि तदैव हि ९२
ापयेत्सखीद्वारा पक्वान्नानि तदालयम् । श्लाघयंश्च हरिस्तानि भुक्त्वा पित्रादिभिः सह॥९३
ागृहं व्रजेत्तैश्च जुष्टं बन्दिजनादिभिः । पक्वान्नानि गृहीत्वा याः सख्यस्तत्र पुराऽऽगताः॥९४
नि च पुनस्तानि प्रदत्तानि यशोदया । सख्यस्तत्र तया दत्तं कृष्णोच्छिष्टं नयन्ति च ॥९५
र्वं ताभिः समानीय राधिकायै निवेद्यते । साऽपि भुक्त्वा सखीवर्गयुता तदनुपूर्वशः ॥ ९६
सखीभिर्मण्डिता तिष्ठेदभिसर्तुं समुद्यता । प्रस्थाप्यते मया काचिदित एव ततः सखी ॥ ९७
तयाऽभिसारिता साऽथ यमुनायाः समीपतः । कल्पवृक्षनिकुञ्जेऽस्मिन्दिव्यरत्नमये गृहे ॥ ९८
सितकृष्णनिशायोग्यवेषा याति सखीयुता । कृष्णोऽपि विविधं तत्र दृष्ट्वा कौतूहलं ततः ॥ ९९
कात्यायन्या मनोज्ञानि श्रुत्वा च गीतकान्यपि । धनधान्यादिभिस्ताश्च प्रीणयित्वा विधानतः॥
जनैराराधितो मात्रा याति सख्या निकेतनम् । मातरि प्रस्थितायां च भोजयित्वा ततो गृहम्॥
तकं कान्तयाऽत्र समागच्छेदलक्षितः । मिलित्वा तावुभावत्र क्रीडतो वनराजिषु ॥ १०२
ारैर्विविधैरेष लीलागीतपुरःसरैः । सार्धयामद्वयं नीत्वा रात्रेरेवं विहारतः ॥ १०३
ुप्सू विशतः कुञ्जं पक्षीशाभिरलक्षितौ । एकान्ते कुसुमैः कॢप्ते केलितल्पे मनोहरे ॥ १०४
ावातिष्ठतस्तत्र सेव्यमानौ निजालिभिः । इति ते सर्वमाख्यातं नैत्यकं चरितं हरेः ॥
पिनोऽपि विमुच्यन्ते श्रवणादस्य नारद ॥ १०५

नारद उवाच—

योऽस्म्यनुगृहीतोऽस्मि त्वया देवि न संशयः । हरेर्दैनंदिनी लीला यतो मेऽद्य प्रकाशिता ॥

सूत उवाच—

क्त्वा तां परिक्रम्य तया चापि प्रपूजितः । अन्तर्धानं गतो ब्रह्मन्नारदो मुनिसत्तमः ॥१०७
ऽप्येतन्नाऽऽनुपूर्व्यात्सर्वं ते परिकीर्तितम् । जपेन्नित्यं प्रयत्नेन मन्त्रयुग्ममनुत्तमम् ॥ १०८
ावक्त्रादिदं लब्धं पुरा रुद्रेण यत्नतः । तेनोक्तं नारदायापि नारदेन ममोदितम् ॥ १०९
कारांश्च विधायैव मयाऽप्येतत्तवोदितम् । त्वयाऽप्येतद्गोपनीयं रहस्यं परमाद्भुतम् ॥ ११०

शौनक उवाच—

कृत्योऽभवं साक्षात्त्वत्प्रसादादहं गुरो । रहस्यानां रहस्यं यत्त्वया मह्यं प्रकाशितम् ॥ १११

सूत उवाच—

नेतानुपातिष्ठ जल्पन्मन्त्रमहर्निशम् । अचिरादेव तद्दास्यमवाप्स्यसि न संशयः ॥ ११२
ऽपि गम्यते ब्रह्मन्नित्यमायतनं विभोः । गुरोर्गुरोर्भानुजायाः कूले गोपीश्वरस्य च ॥ ११३

१ ख. °नि प्रदत्तानि यशोदया । स° । २ ज. °नि भुक्त्वा पित्रादिभिः सह । स° । ३ क. ज. मया । ४ ख. क. ख. °धै रामलास्यगी° । ५ ख. °न्मन्गुरोरायतनं मम । गु° । ६ ख. °भोः । वृन्दारण्ये यत्र नित्यं गुरुर्मेऽस्ति सदाशिवः । इ ।

इदं चरित्रं परमं पवित्रं प्रोक्तं महेशेन महानुभावम् ॥
शृण्वन्ति ये भक्तियुता मनुष्यास्ते यान्ति नूनं पदमच्युतस्य ॥ ११
धन्यं यशस्यमायुष्यमारोग्याभीष्टसिद्धिदम् । स्वर्गापवर्गसंपत्तिकारणं पापनाशनम् ॥ ११
भक्त्या पठन्ति ये नित्यं मानवा विष्णुतत्पराः । न तेषां पुनरावृत्तिर्विष्णुलोकात्कथंचन ११

इति श्रीमहापुराणे पाद्मे पातालखण्डे श्रीवृन्दावनमाहात्म्ये त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

समाप्तमिदं वृन्दावनमाहात्म्यम् ।

आदितः श्लोकानां समष्ट्यङ्काः—१६३६४

---

अथ चतुरशीतितमोऽध्यायः ।

---

ऋषय ऊचुः—

सूत सूत महाभाग लोमहर्षणनन्दन । कथा रम्या त्वया प्रोक्ता लोकस्याऽऽनन्ददायिनी ॥ १
श्रीकृष्णस्य महाभाग चरितं महदद्भुतम्[1] । श्रुतं सर्वं त्वया प्रोक्तं निर्वृतिस्तेन[2] चाभवत्[3] ॥ २
अहो श्रीकृष्णमाहात्म्यं भक्तानां गतिदायकम् । यतस्तेन महाभाग निर्वृत्तिं को न्ववाप्नुयात्॥ ३
अतः पुनरपि श्रीमत्कृष्णस्य चरितं महत् । श्रोतुमिच्छामहे चान्यद्व्रतदानार्हणादिकम् ॥ ४
स्नानं वाऽपि महाभाग यथा येन कृतं पुरा । तत्सर्वं विस्तराद्ब्रूहि यथा नो निर्वृतिर्भवेत् ॥ ५

सूत उवाच—

साधु पृष्टं द्विजश्रेष्ठा लोकानां तारणं परम् । यूयं कृतार्थाः कृष्णस्य भक्तानां पूर्णमानसाः ॥ ६
कृष्णस्य चरितं पुण्यं साधूनां हर्षदं परम् । प्रवक्ष्यामि द्विजश्रेष्ठा महदाख्यानमद्भुतम् ॥ ७
एकदा नारदो लोकान्पर्यटन्भगवत्प्रियः । मथुरायामम्बरीषं कृष्णाराधनमानसम् ॥ ८
महाभागं व्रतपरं ददर्श मुनिसत्तमः । स आगतं मुनिवरं सत्कृत्य नृपसत्तमः ॥
भवन्त ईव पप्रच्छ श्रद्धया हृष्टमानसः ॥ ९

अम्बरीष उवाच—

यन्मुने परमं ब्रह्म वेदवादिभिरुच्यते । स देवः पुण्डरीकाक्षः स्वयं नारायणः परः ॥ १०
यो मूर्तौ मूर्तिमानीशो व्यक्ताव्यक्तः सनातनः । सर्वभूतमयोऽचिन्त्यो ध्यातव्यः स कथं हरिः॥
यस्मिन्सर्वमिदं विश्वमोतप्रोतं प्रतिष्ठितम् । अव्यक्तमेकं परमं परमात्मेति विश्रुतम् ॥ १२
यतो जन्मादि जगतो यो निर्माय स्वयंभुवम् । ददौ तस्मै च निगमानात्मन्येव व्यवस्थितान्॥ १३
कथमाराध्यते सोऽयं समस्तपुरुषार्थदः । योगिनामपि दुर्गम्यस्तदेतत्कृपया वद ॥ १४
अनाराधितगोविन्दो न विन्दति यतोऽभयम् । न तपोयज्ञदानानां लभते फलमुत्तमम् ॥ १५
अनास्वादितगोविन्दपादाम्बुजरसो नरः । मनोरथकथानीतं कथमाकलयेत्फलम् ॥ १६
हरेराराधनं हित्वा दुरितौघनिवारणम् । नान्यत्पश्यामि जन्तूनां प्रायश्चित्तं परं मुने ॥ १७
यत्कूनतनवर्तिन्यः श्रूयन्ते सिद्धयोऽखिलाः । कथमाराध्यते सोऽयं केशवः क्लेशनाशनः ॥ १८
उपास्यते स भगवान्सर्वैराराध्यते कथम् । स्त्रीभिश्च सर्वमेतन्मे हिताय जगतो वद ॥ १९

---

१ झ °तं को न्ववाप्नुयात् । श्रु° । २ झ. ञ. निवृत्तिस्ते° । ३ ख. °न नाभ° । ४ क. ञ. °म् । यतस्तेन म°
५ ख. इति । ६ ख. यदेतत्पर° । ७ ख. °ति हितोदय° । ८ ख. ङ. च. छ. ङ. °वान्कथं नारायणो नरैः । स्त्री° ।

प्रियोऽसौ भगवान्कया भक्त्या प्रसीदति । कथं भक्तिर्भवेदस्मिन्सर्वैराराध्यते कथम् ॥ २०
वोऽसि हरेस्तस्य प्रियोऽसि परमार्थवित् । तेन त्वामेव पृच्छामि ब्रह्मन्ब्रह्मविदुत्तम ॥ २१
ारमथ वक्तारं मष्टारं पुरुषं हरेः । प्रश्नः पुनाति कृष्णस्य तदङ्घ्रिसलिलं यथा ॥ २२
भो मानुषो देहो देहिनां क्षणभङ्गुरः । तत्रापि दुर्लभं मन्ये वैकुण्ठप्रियदर्शनम् ॥ २३
ारेऽस्मिन्क्षणार्धोऽपि सत्सङ्गः शेवधिर्नृणाम् । यस्मादवाप्यते सर्वं पुरुषार्थचतुष्टयम् ॥ २४
ावन्भवतो यात्रा स्वस्तये सर्वदेहिनाम् । बालानां च यथा पित्रोरुत्तमश्लोकवर्त्मनाम् ॥ २५
भूतानां देवचरितं दुःखाय च सुखाय च । सुखायैव हि साधूनां त्वादृशामच्युतात्मनाम् ॥२६
जन्ति ये यथा देवान्देवा अपि तथैव तान् । छायेव कर्मसचिवाः साधवो दीनवत्सलाः]॥२७
स्मात्त्वं भगवन्मह्यं वैष्णवं धर्ममादिश । यस्योपदेशदानेन लभते वेदजं फलम् ॥ २८

नारद उवाच—

ाधु पृष्टं महीपाल विष्णुभक्तिमता त्वया । जानता परमं धर्ममेकं माधवसेवनम् ॥ २९
अस्मिन्नाराधिते विष्णौ विश्वमाराधितं भवेत् । तुष्टं च सकलं तुष्टे सर्वदेवमये हरौ ॥ ३०
यस्य स्मरणमात्रेण महापातकसं[2]ह[3]तिः । तत्क्षणात्त्रासमायाति स सेव्यो रविरेव हि ॥ ३१
[+को नु राजन्निन्द्रियवान्मुकुन्दचरणाम्बुजम् । न भजेत्सर्वतोमृत्युरुपास्यममृषिदैवतैः ॥ ३२
श्रुतोऽनुपठितो ध्यात आदृतश्चानुमोदितः । सद्यः पुनाति सद्धर्मो वीरविश्वद्रुहोऽपि हि ] ॥ ३३
योऽयं कारणकार्यादिकारणस्यापि कारणम् । अनन्यकारणं योगी जगज्जीवो जगन्मयः ॥ ३४
अणुर्बृहत्कृशः स्थूलो निर्गुणो गुणभृन्महान् । अजो जन्मलयातीतो ध्यातव्यः स हरिः सदा ॥
सम्यगेतद्व्यवसितं भवता पुरुषर्षभ । यत्पृच्छसे भागवतान्धर्मास्त्वं विश्वभावनान् ॥ ३६
प्रसङ्गेन सतामात्ममनःकर्णरसायनाः । भवन्ति कीर्तनीयस्य कथाः कृष्णस्य निर्[6]मलाः ॥ ३७
भावसाध्यः स्वयं देवः स्वयं जानाति तद्भवान् । तथाऽपि वक्ष्ये जगतां हिताय तव गौरवात् ॥
यदाहुः परमं ब्रह्म प्रधानं पुरुषात्परम् । यन्मायया सर्वमिदं विश्व[7]मस्तीति सोऽच्युतः ॥ ३९
पुत्रान्कलत्रं दीर्घायू राज्यं स्वर्गापवर्गकम् । स ददातीप्सितं सर्वं भक्त्या संपूजितोऽच्युतः ४०
कर्मणा मनसा वाचा तत्परा ये हि मानवाः । तेषां व्रतानि वक्ष्यामि प्रीतये तव भूपते ॥ ४१
अहिंसा सत्यमस्तेयं ब्रह्मचर्यमकल्कता । एतानि मानसान्याहुर्व्रतानि हरितुष्टये ॥ ४२
एकभुक्तं तथा नक्तमुपवासमयाचितम् । इत्येवं कायिकं पुंसां व्रतमुक्तं नरेश्वर ॥ ४३
वेदस्याध्ययनं विष्णोः कीर्तनं सत्यभाषणम् । अपैशुन्यमिदं राजन्वाचिकं व्रतमुच्यते ॥ ४४
चक्रायुधस्य नामानि सदा सर्वत्र कीर्तयेत् । नाऽऽशौचं कीर्तने तस्य सदाशुद्धिविधायिनः ४५
श्रमाचारवता पुरुषेण परः पुमान् । विष्णुराराध्यते पन्थाः सोऽयं तत्तोषकारणम् ॥ ४६
रूपो हिताचारैर्मनोवाक्कायसंयमैः । व्रतैराराध्यते स्त्रीभिर्वासुदेवो दयानिधिः ॥ ४७
ामोक्तेन मार्गेण स्त्रीशूद्रैरपि पूजनम् । *कर्तव्यं कृष्णचन्द्रस्य द्विजातिवरंरूपिणः ॥ ४८

* एतच्चिह्नान्तर्गतः पाठः ख. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः ख. पुस्तकस्थः । * एतदनन्तरं ख. पुस्तके दोक्तेन च मार्गेण द्विजातीनां च पूजनम् । कर्तव्यं मद्धिया विष्णोश्चिन्तयैकः परिहृदि " इतिश्लोकोऽधिको दृश्यते ।

१ ख. ङ. च. छ. ढ. भक्तिप्रि° । २ ख. °संततिः । ३ ख. °तिः । परमान्तमवाप्नोति स एको हरिरुच्यते । को ।
. ङ. च. छ. ढ. °णाश्रमा° । ५ ख. °नन्तका° । ६ ख. कोमलाः । ७ ख. विश्वं यच्छति । ८ ख. व्रतं भवति
था । वे° । ९ ख. पन्था नान्यस्तो° । १० ङ. च. छ. ढ. °वदरू° ।

त्रयो वर्णास्तु वेदोक्तमार्गाराधनतत्पराः । स्त्रीशूद्रादय एव स्युर्नाम्नाऽऽराधनतत्पराः ॥ ४
न पूजनैर्न[1] यजनैर्न व्रतैरपि माधवः । तुष्यते केवलं भक्तिप्रियोऽसौ समुदाहृतः ॥ ५
[*स्त्रीणां पतिव्रतानां तु पतिरेव हि दैवतम् । स तु पूज्यो विष्णुभक्त्या मनोवाक्कायकर्मभिः ५१
स्त्रीणामथाधिकतया विष्णोराराधनादिकम् । पतिप्रियरतानां च श्रुतिरेषा सनातनी ॥ ५२
शूद्राणां चैव भवति नाम्ना वै देवतार्चनम् । सर्वे चाऽऽगममार्गेण कुर्युर्वेदानुसारिणः ॥ ५३
पिण्डग्रहणधर्मेण यद्यस्य विहितं व्रतम् । तत्तदेवाऽऽचरेद्यस्तु तेन तुष्यति केशवः ] ॥ ५४
हविषाऽग्नौ जले पुष्पैर्ध्यानेन हृदये हरिम् । यजन्ति सूरयो नित्यं जपेन रविमण्डले ॥ ५५
अहिंसा प्रथमं पुष्पं द्वितीयं करणग्रहः । तृतीयकं भूतदया चतुर्थं क्षान्तिरेव च ॥ ५६
शमस्तु पञ्चमं पुष्पं ध्यानं †चैव तु सप्तमम् । सत्यं चैवाष्टमं पुष्पमेतैस्तुष्यति केशवः ॥ ५७
[+एतैरेवाष्टभिः पुष्पैस्तुष्यते चार्चितो हरिः ] । पुष्पान्तराणि सन्त्येव बाह्यानि नृपसत्तम ॥ ५८
एतैरेव तु तुष्येत यतो भक्तिप्रियोऽच्युतः । वारुणं सलिलं पुष्पं सौम्यं घृतपयोदधि ॥ ५९
प्राजापत्यं तथाऽन्नादि त्वाग्नेयं धूपदीपकम् । फलपुष्पादिकं चैव वानस्पत्यं तु पञ्चमम् ॥ ६०
पार्थिवं कुशमूलाद्यं वायव्यं गन्धचन्दनम् । श्रद्धाख्यं विष्णुपुष्पं च वाद्यं विष्णुपदं स्मृतम्॥६१
एभिस्तु पूजितः पुष्पैः सद्यो विष्णुः प्रसीदति । सूर्योऽग्निर्ब्राह्मणो गावो वैष्णवः खं मरुज्जलम्
भूरात्मा सर्वभूतानि पूजास्थानानि वै हरेः । वर्षे तु विद्यया त्रय्या हविषाऽग्नौ जपेत्तु तम् ॥६३
आतिथ्येन तु विप्राग्र्ये गोषु ग्रासरसादिना । वैष्णवे बन्धुसत्कृत्या हृदि खे ध्याननिष्ठया ॥६४
वायौ मुख्यधिया तोये द्रव्यैस्तोयपुरःसरैः । स्थण्डिले मन्त्रहृदयैर्भोगैरात्मानमात्मना(नि)॥ ६५
क्षेत्रज्ञं सर्वभूतेषु समत्वेनार्चयेद्विभुम् । धिष्ण्येष्वेतेषु तद्रूपं शङ्खचक्रगदाम्बुजैः ॥ ६६
युक्तं चतुर्भुजं शान्तं ध्यायन्नर्चेत्समाहितः । ब्राह्मणैः पूजितैरेव हरिः संपूजितो भवेत् ॥ ६७
निर्भर्त्सितैस्तु तैर्भूप भवेन्निर्भर्त्सितो विभुः । निगमो धर्मशास्त्रं च यदाधारेण वर्तते ॥
स द्विजो वैष्णवी मूर्तिः[2] कीर्तितः पावनो नृणाम् ॥ ६८

सर्वं शुभं जगति धर्मत एव लभ्यं धर्मो गतिर्निगमतो नृप धर्मशास्त्रात् ॥
नूनं तयोरपि गतिर्भुवि भूमिदेवास्तैरर्चितैरिह जगत्पतिरर्चितः स्यात् ॥ ६९
न यज्ञदानैर्न तपोभिरुग्रैर्न योगयुक्त्या न समर्चनेन ॥
तथा हरिस्तुष्यति देवदेवो यथा महीदैवततोषणेन ॥ ७०

ब्रह्मण्यो ब्रह्मविद्ब्रह्मा ब्रह्मदेवप्रवर्तकः । ब्राह्मणैरेव तुष्येत तोषितैर्ब्रह्मदैवतम् ॥ ७१
नरकेऽपि चिरं मग्नाः पूर्वजा ये कुलद्वये । तदैव यान्ति ते स्वर्गं यदाऽर्चति सुतो हरिम् ॥ ७२
किं तेषां जीवितेनेह पशुवच्चेष्टितेन किम् । येषां न प्रवणं चित्तं वासुदेवे जगन्मये ॥ ७३
ध्यानं तस्य प्रवक्ष्यामि यन्न दृष्टं हि केनचित् । श्रूयतां भूप कैवल्यं नित्यं मलविवर्जितम् ॥ ७४
यथा दीपो निवातस्थो निश्चलो वह्निरूपधृक् । प्रज्वलन्नाशयेत्सर्वमन्धकारं नृपोत्तम ॥ ७५

* धनुश्चिह्नान्तर्गतः पाठः ख.ङ. पुस्तकस्थः । † अत्र चकारेणानुक्तं षष्ठं दमादिरूपं पुष्पं ग्राह्यमिति भाति । + ए चिह्नान्तर्गतः पाठः ख. पुस्तकस्थः ।

१ ङ. च. छ. ड. °नैर्नैव जपैर्न । २ ख. °म । भक्त्याऽऽहृतानि यैर्विष्णुः पूजितः परितुष्यति । वा° । ३ ख. °र्तिः पावनी परमा मता । स° । ४ ख. महामतः ।

ोषविहीनात्मा भवत्येव निरामयः । निराशो निश्चलो भूप वैरमैत्रीविवर्जितः ॥ ७६
ःदुःखभयद्वेषलोभमोहभ्रमादिभिः । विषयैरिन्द्रियाणां च कृष्णध्यायी विमुच्यते ॥ ७७
ा ज्वालाप्रसङ्गेन दीपस्तैलं प्रशोषयेत् । तथा ध्यानप्रसङ्गेन कर्मणोऽपि क्षयो भवेत् ॥ ७८
्यानं द्विविधं तस्य प्रोक्तं शंकरपूर्वकैः । निर्गुणं सगुणं वाऽपि तत्राऽऽद्यं शृणु मानद ॥ ७९
ेवलं ज्ञानदृष्ट्याऽसौ दृश्यते योगयुक्तिभिः । परमात्मपरै राजन्सततं ध्यानतत्परैः ॥ ८०
स्तपादविहीनश्च सर्वं गृह्णाति गच्छति । मुखनासाविहीनश्च भुङ्क्ते जिघ्रति भूपते ॥ ८१
अकर्णः शृणुते सर्वं सर्वसाक्षी जगत्पतिः । अरूपो रूपसंबद्धः पञ्चवर्गवशं गतः ॥ ८२
सर्वलोकस्य यः प्राणः पूज्यते सचराचरैः । अजिह्वो वदते सर्वं वेदशास्त्रानुगं तथा ॥ ८३
त्वग्विहीनः स्पृशेत्सर्वं शीतोष्णादि नराधिप । सदानन्दो विविक्तात्म एकरूपो निराश्रयः॥ ८४
निर्गुणो निर्ममो व्यापी सगुणो निर्मलौजसः । अवश्यः सर्ववश्यात्मा सर्वदः सर्ववित्तमः ॥ ८५
तस्य माता च नैवास्ति स वै सर्वमयो विभुः । एवं सर्वमयं ध्यानं यश्च पश्यत्यनन्यधीः ॥ ८६
स याति परमं स्थानममूर्तममृतोपमम् । द्वितीयं तु प्रवक्ष्यामि तच्छृणुष्व महामते ॥ ८७
मूर्ताकारं तु साकारं निरालम्बं निरामयम् । यस्य वासनया सर्वं ब्रह्माण्डं वासितं नृप ॥ ८८
स तस्माद्वासुदेवेति प्रोच्यते विधिपूर्वकैः । स्निग्धप्रावृड्घनश्यामं सूर्यतेजःसमप्रभम् ॥ ८९
दक्षिणे शोभते शङ्खो महामणिविचित्रितः । कौमोदकी गदा चापि महासुरविमर्दिनी ॥ ९०
वामे च शोभते वीर पद्मं चक्रं जगत्पतेः । चतुर्बाहुं सुरेशानं शार्ङ्गिणं कमलापतिम् ॥ ९१
कम्बुग्रीवं सुवृत्तास्यं पद्मपत्रनिभेक्षणम् । राजमानं हृषीकेशं दशनैः कुन्दसंनिभैः ॥ ९२
गुडाकेशस्य नृपतेरधरो विद्रुमाकृतिः । शोभते पद्मनाभाख्यः किरीटेनातिभास्वता ॥ ९३
विलासी लक्ष्मलक्ष्मी च केशवः कौस्तुभाङ्कितः । जनार्दनः सूर्यतेजःकुण्डलाभ्यां विराजितः॥ ९४
केयूरहारकटककटिसूत्राङ्गुलीयकैः । विराजते भ्राजमानो वपुषाऽलंकृतेन च ॥ ९५
वाससा हेमवर्णेन प्रावृतो गरुडासनः । ध्यातव्यः सगुणो राजन्भक्ताघौघहरो हरिः ॥ ९६

* संधिरार्षः ।

१ ख. °लो वीर न मित्रं न रिपुस्तथा । शोको हर्षो विस्मयो वा न लोभो मत्सरो भ्रमः । संभ्रमैर्लोभमोहैश्च सुखदुःखै-
विमुच्यते । विषयैश्च च सर्वैश्च इन्द्रियाणां यदा नरः । तदा स केवलो ज्ञानी वैजल्पत्वं प्रपद्यते । ज्वालाकर्मप्रसङ्गेन दीप-
तैलं प्रशोषयेत् । वर्त्याधारेण राजेन्द्र निर्द्वंद्वो वायुवर्जितः । कज्जलं वमते पश्चात्तैलस्यापि महामते । स्वयमाकृष्य तत्तैलं
ेजसा निर्मलो भवेत् । काये चान्तःस्थितस्तद्वत्कर्मतैलं प्रशोषयेत् । विषयान्कज्जलं कृत्वा प्रत्यक्षात्संप्रदर्शयेत् । ज्वा-
या निर्मलो भूत्वा स्वयमेव प्रकाशते । क्रोधलोभादिसंज्ञैस्तैर्वायुभिः परिवर्जितः । निस्पृहो निश्चलो भूत्वा तेजो वीर्ये
यं ज्वलेत् । त्रैलोक्यं पश्यते सर्वं स्वस्थाने स्वस्वतेजसा । केवलज्ञानरूपोऽयं मया ते परिकीर्तितः । ध्यानं तस्य प्रव-
ामि द्विविधं तस्य चक्रिणः । केवलज्ञानरूपेण दृश्यते परचक्षुषा । योगयुक्ता महात्मानं परमार्थपरायणाः । यं पश्यन्ति
ीन्द्रास्तु सर्वज्ञं सर्वदर्शकम् । हस्तपादविहीनश्च सर्वत्र परिगच्छति । सर्वं गृह्णाति त्रैलोक्यं स्थावरं जङ्गमं पुनः । मुख° ।
ा. ञ. °र्मलोजसः । अ° । ३ ख. नृपनन्दन । ४ °कैः । वर्षमाणस्य मेघस्य यद्भासा तस्य तद्भवेत् । द° । °कैः । सूर्य-
ःप्रकाशश्च चतुर्बाहुश्चरेश्वरः । द° । ५ ख. °ङ्गो हेमरत्नविभूषितः ।
विशालेनापि रूपेण केशवस्तु सुवक्षसा । कौस्तुभेनाङ्कितेनैव राजमानो जनार्दनः । सूर्यतेजःप्रतीकाशकुण्डलाभ्यां
ति च । श्रीवत्साङ्केन पुण्येन सर्वदा राजते हरिः । के° । ७ ख. °यूरकङ्कणैर्हारैर्मौक्तिकैर्ऋक्षसंनिभैः । वपुषा भ्राजमानस्तु
यो जयतां वरः । भ्राजते सोऽपि गोविन्दो हेमवर्णेन वाससा । मुद्रिकाभिश्च युक्ताभिरङ्गुलीभिर्विराजते । सर्वायुधैश्च
ादिव्यैराभरणैर्हरिः । वैनतेयसमारूढो लोककर्ता जगत्पतिः । एवं यो ध्यायते नित्यमनन्यमनसा हरिम् । मुच्यते सर्वपा-
ो विष्णुलोकं ।

एवं ते ध्यानमुद्दिष्टं द्विविधं नृपसत्तम । यत्कृत्वा मुच्यते पापैर्मनोवाक्कायसंभवैः ॥
यं यं चाभिलषेत्कामं तं तं प्राप्नोति निश्चितम् । पूज्यते देववर्गैश्च विष्णुलोकं स गच्छति ॥

इति श्रीमहापुराणे पाद्मे पातालखण्डे नारदाम्बरीषसंवादे वैशाखमाहात्म्ये (वैष्णवधर्मकथने) चतुरशीतितमोऽध्यायः ॥

आदितः श्लोकानां समष्ट्यङ्काः—१६४६२

---

अथ पञ्चाशीतितमोऽध्यायः ।

---

अम्बरीष उवाच[1]—

साधु साधु मुनिश्रेष्ठ लोकानुग्रहकारक । विष्णोर्ध्यानं त्वया प्रोक्तं सगुणं निर्गुणं च यत् ॥
अधुना लक्षणं ब्रूहि भक्तेः साधुकृपाकर । यादृशी क्रियते येन यथा यत्र यदा तथा ॥

सूत उवाच—

इत्युक्तमाकर्ण्य नृपोत्तमस्य मुनिः प्रहृष्टो निजगाद भूपम् ।
शृणुष्व राजन्नखिलाघहारिणीं भक्तिं हरेस्ते प्रददामि सम्यक् ॥

त्रिविधा भक्तिरुद्दिष्टा मनोवाक्कायसंभवा । लौकिकी वैदिकी चापि भवेदाध्यात्मिकी तथा ॥
ध्यानधारणया बुद्ध्या वेदानां स्मरणेन च । विष्णुप्रीतिकरी चैषा मानसी भक्तिरुच्यते ॥
वेदमन्त्रसमुच्चारैरविश्रान्तं दिवानिशम् । जपैश्चाऽऽरण्यकैश्चैव वाचिकी भक्तिरिष्यते[2] ॥
व्रतोपवासनियमैः पञ्चेन्द्रियजयेन च । कायिकी भक्तिरुद्दिष्टा सर्वसिद्धिविधायिनी ॥
पाद्यार्घ्याद्युपचारैश्च नृत्यवादित्रगीतकैः । बलिभिर्जागरार्चाभिर्लौकिकी भक्तिरीरिता ॥
ऋग्यजुःसामजप्यैश्च संहिताध्ययनादिभिः । हविर्होमक्रियाभिश्च या भक्तिः सा तु वैदिकी ॥
दर्शश्च पौर्णमासश्च विषुवादिषु यः पुनः । यागः संकीर्तितो विज्ञैर्वैदिकीभक्तिसाधकः ॥
चतुर्विंशतित(स्त)त्त्वानि प्रधानादीनि संख्यया । अचेतनानि राजेन्द्र पुरुषः पञ्चविंशकः ॥
चेतनः स समुद्दिष्टः कर्ता भोक्ता च कर्मणाम् । आत्मा नित्यो ह्यसक्तश्च ह्यधिष्ठाता प्रयोजकः[3]
व्यक्तिस्थश्चेतनो नित्यः कारणानां च कारणम् । तत्त्वसर्गो भावसर्गो भूतसर्गश्च तत्त्वतः ॥
संख्यायाश्च[4] प्रसंख्यानं प्रधानं च गुणात्मकम् । ज्ञात्वा साधर्म्यवैधर्म्ये प्रधानस्य[5] गुणात्मनः
कारणत्वं ब्रह्मणश्च साधर्म्यमिदमुच्यते । नानात्वं चात्र वैधर्म्यं प्रधानस्य विदुर्बुधाः ॥
तत्त्वान्तरं च तत्त्वानां कार्यकारणमेव च । प्रयोजनं प्रयोज्यत्वं ज्ञात्वा तत्त्वप्रसंख्यया ॥
संख्यानां प्रोच्यते प्राज्ञैः सर्वतत्त्वार्थचिन्तकैः । इति मत्वाऽस्य सद्भावं तत्त्वसंख्यां च तत्त्वतः
ब्रह्मतत्त्वाधिकं चापि ज्ञात्वा तत्त्वं विदुर्बुधाः । सांख्यैः कृता भक्तिरेषा प्रोच्यतेऽध्यात्मिकी

---

१ ख. नारद उवाच—एतत्ते सर्वमाख्यातं ध्यानभेदं जगत्पतेः । अथ भक्तिं प्रवक्ष्यामि विविधां पापनाशिनीम् । विवि
२ ख. °नी । भूषणैर्हेमरत्नाढ्यैश्चित्राभिर्वाग्भिरेव च । वासः प्रतिसरैः सूत्रैः पविकव्यजनोत्थितैः । नृत्यवादित्रगीतैश्च र
बल्युपहारकैः । भक्ष्यभोज्यान्नपानैश्च या पूजा क्रियते नरैः । नारायणं समुद्दिश्य सा भक्तिर्लौकिकी मता । ऋग्यजुःसाम
प्यानि संहिताध्ययनानि च । क्रियते विष्णुमुद्दिश्य सा भक्तिर्वैदिकोच्यते ॥ वेदमन्त्रहविर्योगैर्या क्रिया वैदिकी स्मृत
दर्शे च पौर्णमास्यां च कर्तव्यं वाऽग्निहोत्रकम् ॥ प्राशनं दक्षिणादानं पुरोडाशं चरुक्रिया । इष्टिर्धृतिः सोमपानं या
कर्म सर्वशः ॥ अग्निभूम्यनिलाकाशजलशंकरभास्करम् । तमुद्दिश्य कृतं कर्म तत्सर्वं विश्वदैवतम् ॥ आध्यात्मिकीति विवि
ब्रह्मभक्तिः स्थिता नृप । सांख्याख्यां योगसंजातां शृणु भूप यथोदिताम् ॥ चतु° । ३ ख. °कः । पुरुषोऽव्यक्तनि
स्यात्कार° । ४ ख. °ख्यायाः परिसंख्यायाः प्र° । ५ ख. °धानं च विधार्मि च । का° ।

जामपि वक्ष्यामि भक्तिमाध्यात्मिकीं शृणु । प्राणायामपरो नित्यं ध्यानवान्नियतेन्द्रियः १९
भक्ष्यव्रती चापि विषयेभ्यो निवृत्तिमान् । पश्यञ्जुष्टोतितमुखं ब्रह्मसूत्रं कटीतटे ॥ २०
वर्णं चतुर्बाहुं वरदाभयहस्तकम् । ध्यायमानः स्वहृदये योगयुक्तो महेश्वरम् ॥ २१
स्वचेतसा राजन्पीतवस्त्रं सुलोचनम् । [*योगजा मानसी सिद्धिर्विष्णुभक्तिः परा स्मृता ॥
वं भक्तिमान्देव विष्णुभक्तः स उच्यते । एवं भक्तिः समुद्दिष्टा विविधा नृपनन्दन] ॥ २३
त्त्विकी राजसी चैव तामसी भेदतस्त्विमाः । भक्तयो विविधा ज्ञेया विष्णोरमिततेजसः॥२४
ऽग्निः सुसमिद्धार्चिः करोत्येधांसि भस्मसात् । पापानि भगवद्भक्तिस्तथा दहति तत्क्षणात् २५
यावज्जनो न शृणुते भुवि विष्णुभक्तिं साक्षात्सुधारसमशेषरसैकसारम् ।
तावज्जरामरणजन्मशताभिघातदुःखानि तानि लभते बहुदेहजानि ॥ २६
संचिन्तितः कीर्तित एव नित्यं महानुभावो भगवाननन्तः ।
समन्ततोऽघं विनिहन्ति मेघं वायुर्यथा भानुरिवान्धकारम् ॥ २७
न भूप देवार्चनयज्ञतीर्थस्नानव्रताचारतपःक्रियाभिः ।
तथा विशुद्धिं लभतेऽन्तरात्मा यथा हृदिस्थे भगवत्यनन्ते ॥ २८
कथा विशुद्धा नरनाथ तथ्यास्ता एव पथ्या हरिभक्तकथ्याः ।
संकीर्त्यते यासु पवित्रकीर्तिर्विशुद्धमूर्तिर्निजदत्तभक्तिः ॥ २९
धन्योऽसि धीर धरणीधर धर्मधुर्य ध्यानैकतानहृदयः पुरुषोत्तमस्य ।
यन्नैष्ठिकी मतिरसौ तव सौभग श्रीः श्रीकृष्णचन्द्रसुकृतश्रवणे प्रवृत्ता ॥ ३०
अनाराध्य हरिं भक्त्या वरदं विष्णुमव्ययम् । कुतः श्रेयो भवेद्भूप पुरुषस्याऽऽत्ममानिनः ॥३१
मायाजनिरमायोऽसौ भक्त्या राजन्य मायया । साध्यते साधुपुरुषैः स्वयं जानाति तद्भवान्॥३२
न विद्यते ते नृप धर्मतत्त्वमज्ञातमेतद्विपुलं पुनर्माम् ।
यत्पृच्छसे तीर्थपदप्रसङ्गात्कथारसं वैष्णवगौरवेण ॥ ३३
नातः परं परमतोषविशेषपोषं पश्यामि पुण्यमुचितं च परस्परेण ॥
सन्तः प्रसज्य यदनन्तगुणाननन्तश्रेयोनिधीनधिकभावजुषो भजन्ति ॥ ३४
ब्राह्मणाः सुरभी सत्यं श्रद्धायागतपांसि च । श्रुतिस्मृतिदयादीक्षासंतोषास्तनवो हरेः ॥३५
आदित्यश्चन्द्रमा वायुर्भूमिरापोऽम्बरं दिशः । ब्रह्मा विष्णुश्च रुद्रश्च सर्वभूतमयो विभुः ॥ ३६
विश्वरूपः स्वयं शक्तो जगदेतच्चराचरम् । स्वयं ब्राह्मणमाविश्य सदैवान्नं भुनक्ति च ॥ ३७
ततस्तु तीर्थास्पदपादरेणून्धराधरात्मालयभूमिरेखान् ।
सभाज्य संपूजय पुण्यलक्ष्मीसर्वस्वभूतानखिलात्मभूतान् ॥ ३८
ब्राह्मणं विष्णुबुद्ध्या यो विद्वांसं साधु पश्यति । स एव वैष्णवो यश्च स्वस्य धर्मे समास्थितः ३९
तत्ते सर्वमाख्यातं भक्तिलक्षणमर्थितम् । स्नातुं गच्छामि गङ्गायां न कथावसरोऽधिकः ॥ ४०
ासोऽयं माधवो मासो [†माधवस्यातिवल्लभः । तस्यापि सप्तमी शुक्ला गङ्गायामतिदुर्लभा ॥ ४१
ाखशुक्लसप्तम्यां जाह्नवी जह्नुना पुरा । क्रोधात्पीता पुनस्त्यक्ता कर्णरन्ध्रात्तु दक्षिणात् ॥ ४२

* एतच्चिह्नान्तर्गतः पाठः, ठ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः ख. ङ. च. छ. झ. पुस्तकस्थः ।

१ ख. हृत्पद्मकर्णिकासीनपीत° । २ ख. श्रुतानुभावो । ३ ख. °यो लभेत्तावत्पुरुषः सुकृतिं विना । मा° । ४ झ. ञ. तोत्रं । ५ ङ. च. झ. शक्तो ।

तस्यां समर्चयेद्देवीं गङ्गां गगनमेखलाम् । स्नात्वा सम्यग्विधानेन स धन्यः सुकृती नरः ॥
तस्यां यस्तर्पयेद्देवान्पितॄन्मर्त्यो यथाविधि । साक्षात्पश्यति तं गङ्गा स्नातकं गतपातकम् ॥
न माधवसमो मासो] न गङ्गासदृशी नदी । दुर्लभः खलु योगोऽयं हरिभक्त्यैव लभ्यते ॥
विष्णुपादसमुद्भूता ब्रह्मलोकादुपागता । श्रीमहेशजटाजूटवासिनी दुःखनाशिनी ॥
त्रिभिः स्रोतोभिरश्रान्तं या पुनाति जगत्त्रयम् । स्वर्गारोहणनिश्रेणी सततानन्दकारिणी ॥
अनेकदुरितोद्धारहारिणी दुर्गतारिणी । भजमानजनस्यान्तःकान्तिकेलिविलासिनी ॥
सगरान्वयनिर्वाणकारिणी धर्मचारिणी । त्रिमार्गचारिणी देवी लोकालंकृतिकारिणी ॥
दर्शनस्पर्शनस्नानकीर्तनध्यानसेवनैः । (अ)पुण्यान्पुण्यपुरुषान्पावयन्ती सहस्रशः ॥
गङ्गा गङ्गेति गङ्गेति यैस्त्रिसंध्यं त्रिरीरितम् । सुदूरस्थैश्च तत्पापं हन्ति जन्मत्रयार्जितम् ॥
योजनानां सहस्रेषु गङ्गां यः स्मरते नरः । अपि दुष्कृतकर्माऽसौ लभते परमां गतिम् ॥
वैशाखशुक्लसप्तम्यां दुर्लभा सा विशेषतः । प्राप्यते जगतीपाल हरिविप्रप्रसादतः ॥
न माधवसमो मासो न माधवसमो विभुः । पोतो हि दुरिताम्भोधौ मज्जमानजनस्य यः ॥ ५
दत्तं जप्तं हुतं स्नातं यद्भक्त्या मासि माधवे । तदक्षयं भवेद्भूप पुण्यं कोटिशताधिकम् ॥ ५
यथा देवेषु विश्वात्मा देवो नारायणो विभुः । यथा जप्येषु गायत्री सरितां जाह्नवी तथा ॥ ५
यथोमा सर्वनारीणां तपतां भास्करो यथा । आरोग्यलाभो लाभानां द्विपदानां द्विजो यथा ॥ ५
परोपकारः पुण्यानां विद्यानां निगमो यथा । मन्त्राणां प्रणवो यद्वद्ध्यानानामात्मचिन्तनम् ॥ ५
सत्यं स्वधर्मवर्तित्वं तपसां च यथा वरम् । शौचानामात्मशुद्धिश्च दानानामभयं यथा ॥ ५
गुणानां च यथा लोभक्षोभो मुख्यो गुणः स्मृतः । मासानां प्रवरो मासस्तथाऽसौ माधवो मतः
तत्र यत्क्रियते दानं यज्ञः स्नानमुपोषणम् । तपोऽध्ययनपूजादि तदक्षयफलं स्मृतम् ॥ ६
वैशाखान्तानि पापानि सूर्यान्तानि तमांसि च ॥ परोपकारपैशुन्यप्रान्तानि सुकृतानि च ॥ ६
कार्तिके मासि यत्किंचित्तुलासंस्थे दिवाकरे । स्नानदानादिकं राजंस्तत्परार्धगुणं भवेत् ॥ ६
तस्मात्सहस्रगुणतो माघे मकरगे रवौ । ततोऽपि शतसंख्याकं वैशाखे मेषगे रवौ ॥ ६
ते धन्यास्ते सुकृतिनो नरा वैशाखमासि ये । प्रातः स्नात्वा विधानेन पूजयन्ति च माधवम् ६
प्रातःस्नानं च वैशाखे यज्ञदानमुपोषणम् । हविष्यं ब्रह्मचर्यं च महापातकनाशनम् ॥ ६६
पुनः कलियुगे राजन्न तद्गोप्यं भविष्यति । अश्वमेधाधिकं यस्मान्माहात्म्यं माधवस्य यत् ॥ ६
अश्वमेधमखः पुण्यः कलौ नैव प्रवर्तते । एष माधवमासस्य हयमेधसमो विधिः ॥ ६
अश्वमेधस्य यत्पुण्यं स्वर्गमोक्षफलप्रदम् । न वेत्स्यन्ति कलौ पापा जना दुरितबुद्धयः ॥ ६
तस्मिन्भवैर्नरैः पापैर्गन्तव्यं नरकार्णवे । अतस्तु विरलस्तस्य प्रचारो येन निर्मितः ॥ ७

इति श्रीमहापुराणे पाद्मे पातालखण्डे वैशाखमाहात्म्ये पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१६५३२

---

अथ षडशीतितमोऽध्यायः ।

---

सूत उवाच—
इति तस्य वचः श्रुत्वा नारदस्य महात्मनः । अम्बरीषस्तु राजर्षिर्विस्मितो वाक्यमब्रवीत् ॥

१ ख. °ति गङ्गायां स्नातको ग° । २ ख. माधवमासतः । ३ ख. °ते श्राद्धं यज्ञदान° । ४ ङ. म. एकमा° ।

अम्बरीष उवाच—

[ ]र्षादिकान्मासान्हित्वा पुण्यान्महामुने । सर्वमासाधिकं मासं वैशाखं किं प्रशंससि ॥ २

[ ]ोऽप्यधिको यस्मान्माधवो माधवप्रियः । को विधिस्तत्र किं दानं किं तपः का च देवता ॥ ३

[ ]त्पदाम्भोजरजसा पावितस्य च मे मुने । उपदेशप्रदानेन प्रसादं कर्तुमर्हसि ॥ ४

[ ] धर्ममार्गाणामुपदेष्टाऽसि वै मुने । त्वमेकोऽखिलतत्त्वार्थं जानासि मुनिसत्तम ॥ ५

[ ]पदेष्टा धर्माणामनुमन्ता प्रयोजकः । शास्त्रविद्भिर्मुनिवर स्मर्यन्ते समभागिनः ॥ ६

[ ]व्रतपोदानैर्यत्फलं समवाप्यते । धर्मोपदेशदानेन तत्सर्वमुपलभ्यते ॥ ७

[ ]स्नानं तपो यज्ञकर्म यत्कुरुते शुभम् । अपि तत्फलभागी स्याद्यः प्रवर्तयिता भवेत् ॥ ८

[ ]सि भवान्पुण्यमुपदेष्टुं कृपानिधे । दुर्लभो गुरुसंबोधो देशकालोपपत्तयः ॥ ९

[ ]चन तथा भावाश्चेतः शीतलयन्ति नः । राज्यलाभादयोऽप्येते यथा तव समागमः ॥ १०

सूत उवाच—

[ ] मन्दमृदुस्मेरस्फुरद्दन्तप्रभानुगः । अम्बरीषं प्रत्युवाच नारदो मुनिसत्तमः ॥ ११

नारद उवाच—

[ ]णु राजन्प्रवक्ष्यामि हिताय जगतस्तव । विधिं माधवमासस्य यः प्रोक्तो ब्रह्मणा पुरा ॥ १२

[ ]र्लभं भारते वर्षे जन्म तस्मान्मनुष्यता । मानुषे दुर्लभं चापि स्वस्वधर्मे प्रवर्ति(र्त)नम् ॥ १३

[ ]तोऽपि भक्तिर्भूपाल वासुदेवे सुदुर्लभा । तत्रापि दुर्लभो मासो माधवो माधवप्रियः ॥ १४

[ ]मवाप्य ततो मासं स्नानदानजपादिकम् । कुर्वन्ति विधिना ये तु धन्यास्ते कृतिनो नराः ॥ १५

[ ]षां दर्शनमात्रेण पापिनोऽपि विकल्मषाः । भवन्ति भगवद्भावभाविता धर्मकाङ्क्षिणः ॥ १६

[ ]ाधवे मासि यैः स्नातं प्रातर्नियमसंयुतैः । ते कोटिवर्षपर्यन्तं क्रीडन्ते नन्दने वने ॥ १७

[ ]था न वारिधिसमो लोके कोऽपि जलाशयः । तथा मासो न वैशाखसदृशो माधवप्रियः ॥ १८

[ ]ावत्पापानि तिष्ठन्ति मनुष्याणां कलेवरे । यावत्किल मलध्वंसी मासो नाऽऽयाति माधवः ॥ १९

अवशिष्टदिनान्येव पञ्च मासस्य तस्य वै । एकादशीं समारभ्य सर्वमाससमानि वै ॥ २०

वैशाखे पूजितो देवो माधवो मधुहा तु यैः । नानोपचारै राजेन्द्र तैः प्राप्तं जन्मनः फलम् ॥ २१

किं किं न दुर्लभतरं प्राप्यते मासि माधवे । स्नानेन परमेशस्य पूजनेन यथाविधि ॥ २२

न दत्तं न हुतं जप्तं न तीर्थे मरणं कृतम् । यैर्हि नारायणो नैव ध्यातो निखिलपापहा ॥ २३

तेषां जन्म नृणां लोके ज्ञातव्यं निष्फलं नृप । द्रव्येषु विद्यमानेषु कृपणो यो भवेन्नरः ॥ २४

अदत्त्वा म्रियते यो हि तस्य द्रव्यं निरर्थकम् । तीर्थस्नानादितपसा सत्कुले जन्म लभ्यते २५

न दानेन विना भूप किंचिदप्युपतिष्ठति । वैशाखस्नानमाहात्म्यादपि पञ्चदिनात्मकात् ॥ २६

सत्कुले प्राप्यते जन्म वैभवं विविधं तथा । सुपुत्रः सुकुलं भूप धनधान्यं वरस्त्रियः ॥ २७

सुजन्म मरणं चापि सुभोगाः सुखमेव च । सदा दानेऽधिका प्रीतिरौदार्यं धैर्यमुत्तमम् ॥ २८

प्रसादात्तस्य देवस्य विष्णोश्चैव महात्मनः । नारायणस्य जायन्ते सिद्धयो भूप वाञ्छिताः ॥ २९

ऊर्जे मासि तपोमासि माधवे माधवप्रिये । स्नात्वा दामोदरं भक्त्या माधवं मधुसूदनम् ॥ ३०

विशेषेण समभ्यर्च्य दत्त्वा दानानि शक्तितः । ऐहिकं सुखमासाद्य नरो हरिपदं व्रजेत् ॥ ३१

---

१ म. स्मर्यते । २ ङ. च. छ. झ. 'संबन्धो दे' ।

अनेकजन्मार्जितपातकावली विलीयते माधवमज्जनेन ।
सूर्योदये भूप यथा तमिस्रं वचः स्वयंभूरिदमादिशन्मे ॥
चकार विष्णुर्विपुलप्रचारं मासस्य वै माधवसंज्ञकस्य ।
यमस्य गुप्तं वचसा विचिन्त्य मनुष्यलोके गमितं चकार ॥
तस्मादस्मिन्समायाते माधवे मासि वैष्णवैः । स्नात्वा पुण्यजले तीर्थे गङ्गायाः पा
रेवाया वा महाराज यामुने सारदेऽथवा । प्रातस्त्वनुदिते भानौ विधानेन नृपोत्त
पूजयित्वा च देवेशं मुकुन्दं मधुसूदनम् । पुत्रपौत्रधनश्रेयोवाञ्छितानि सुखानि च
अनुभूय तपस्त्वन्ते स्वर्गमक्षयमाप्नुयात् । एवं ज्ञात्वा महाभाग मधुसूदनमर्चय ॥
स्नात्वा सम्यग्विधानेन वैशाखे तु विशेषतः । देवमाराध्य गोविन्दं नारायणमनाम
प्राप्स्यसि त्वं सुखं पुत्रं धनानि च हरेः पदम् । देवदेवं नमस्कृत्य माधवं पापनाश
प्रारभेत व्रतमिदं पौर्णमास्यां मधोर्नृप । यमैश्च नियमैर्युक्तः शक्त्या किंचित्प्रदाय च
हविष्यभुग्भूमिशायी ब्रह्मचर्यव्रते स्थितः । कृच्छ्रादितपसा क्षामो ध्यायन्नारायणं हृ
एवं प्राप्य च वैशाखीं दद्यान्मधुतिलादिकम् । भोजनं द्विजमुख्येभ्यो भक्त्या धेनुं
अच्छिद्रं प्रार्थयेच्चापि तस्य स्नानस्य भूसुरान् । यथा लक्ष्मीः प्रिया भूप माधवस्य ज
तथैव माधवो मासो मधुसूदनवल्लभः । एवंविधियुतो मर्त्यः स्नात्वा द्वादशवत्सरम् ॥
उद्यापनं चरेच्छक्त्या मधुसूदनतुष्टये । इदं माधवमासस्य माहात्म्यं कथितं तव ॥
यत्पुरा ब्रह्मणो वक्त्राच्छ्रुतमासीन्मया नृप ॥

इति श्रीमहापुराणे पाद्मे पातालखण्डे वैशाखमासमाहात्म्ये षडशीतितमोऽध्यायः ॥ ८६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१६५७६

---

अथ सप्ताशीतितमोऽध्यायः ।

---

सूत उवाच—

इति तस्य वचः श्रुत्वा नारदस्य स भूपतिः । प्रणम्य विस्मितः प्राह चिन्तयन्मनसा ह

अम्बरीष उवाच—

कथमेतद्विमुह्यामः स्वल्पायासेन यन्मुने । प्राप्यते स्नानमात्रेण फलं चैवातिदुर्लभम् ॥

नारद उवाच—

सत्यमुक्तं त्वया राजन्नल्पायासेन यन्महत् । फलं संप्राप्यते तत्र श्रद्धत्स्व विधिभाषितम्
धर्मस्य गतयः सूक्ष्मा दुर्ज्ञेया हीश्वरैरपि । मुह्यन्ते चात्र विद्वांसोऽचिन्त्यशक्तिर्हरेः कृतौ ॥
विश्वामित्रादयो राजन्धर्माधिक्येन बाहुजाः । ब्राह्मण्यं समुपायाताः सूक्ष्मा धर्मगतिस्त्वत
अजामिलोऽपि भूपाल दासीपतिरिति श्रुतः । धर्मपत्नीपरित्यागी नित्यं पापपथि स्थितः
म्रियमाणः सुतस्नेहात्प्रोच्य नारायणेति च । तद्ध्याननामग्रहणात्पदं लेभे सुदुर्लभम् ॥
अनिच्छयाऽपि दहति स्पृष्टो हुतवहो यथा । तथा दहति गोविन्दनाम व्याजादपीरितम् ।
कानीनस्य मुनेः पौत्रा भ्रातृजायाभिगामिनः । गोलकस्य च वै पण्डोः पुत्राः कुण्डाः स्वयं

---

१ च. 'रस्वतेऽथ' । २ झ. ञ. दुर्गेया ।

च भूपाल पाण्डवा द्रौपदीरताः । तेषां च पुण्यश्लोकत्वं सूक्ष्मा धर्मगतिस्त्वतः १०
णि च कर्माणि विचित्रा भूतभावनाः । विचित्राणि च भूतानि विचित्राः कर्मशक्तयः ॥
सुकृतं कर्म कूटस्थं यदवस्थितम् । केनचित्कर्मणा भूप शुभेन परिवर्धते ॥ १२
दाति सुमहत्कस्मिन्नपि च जन्मनि । सूक्ष्मो धर्मोऽतिगहनो मीयते न यथा तथा ॥ १३
फलदानस्य श्रूयते भूप निश्चयः । यत्किंचित्सुकृतं कर्म च्छन्नं पापान्तरैरपि ॥ १४
स्य कुतः क्वापि स्वं फलं च प्रयच्छति । कृतस्य स्ने(ने)[1] नाशोऽस्ति पुण्यस्य दुरितस्य च
पि बहुभिः पुण्यैर्दुरितं याति दारुणम् । यदुक्तं भवता राजन्नायासाधिक्यतो भवेत् ॥१६
ुण्यं च तत्रापि कारणं मे निशामय । स्वल्पायासमहायासौ यद्यल्पत्वमहत्त्वयोः ॥ १७
ुण्यास्ततस्ते स्युः सततं कर्षकादयः । मन्त्रोचारं च(राच) सिंहादेरायासं(स) बहुलं(ल) त्वतः
ाण्यं प्रशस्तं वै व्रताङ्गत्वेन नो भवेत् । इतिकर्तव्यबाहुल्यं महत्त्वं च तदल्पता ॥ १९
ाग्न्यादिप्रवेशस्य प्रसज्येत व्रतान्तरात् । इदमल्पं महच्चैतदिति नैव नियामकम् ॥ २०
यच्चोदितं शास्त्रे तदेव स्यान्महन्नृप । यथाऽल्पनाशो महता महन्नाशस्तथाऽल्पतः ॥
स्वल्पविस्फुलिङ्गेन तृणराशिः प्रदह्यते ॥ २१

हत्यायुतं पापसहस्रमुग्रं गुर्वङ्गनाकोटिनिषेवणं च ।
स्तेयादिपापानि च कृष्णभक्तैरज्ञानजातानि लयं ह्रियन्ते ॥ २२

भक्तिमता वीर यत्किंचित्क्रियतेऽल्पकम् । सुकृतं साधु विदुषा तदक्षयफलं भवेत् ॥ २३
नात्र कर्तव्यो माधवे मासि माधवम् । समाराध्य नरो भक्त्या तत्तद्वाञ्छितमाप्नुयात् ॥ २४
ं द्रविणं रत्नं दारा हर्म्यं हया गजाः । सुखानि स्वर्गमोक्षौ च न दूरे हरिभक्तितः ॥ २५
शास्त्रोक्तविधिना स्वल्पेनापि न संशयः[2] । पापस्य महतोऽपि स्यात्क्षयो वृद्धिः सुकर्मणः २६
धिक्यं भवेद्भूप त्वाधिक्याद्भाविकर्मणोः[3] । सूक्ष्मा धर्मस्य विज्ञेया गतिस्तु विविधैरपि ॥ २७
माधवमासोऽयं माधवस्य महात्मनः । एकोऽप्यनुष्ठितो लोकैः[4] समग्रेप्सितदायकः ॥ २८

पुण्येन गाङ्गेन जलेन काले देशे च यः स्नानपरोऽपि भूप ।
आजन्मतो भावहतोऽपि दाता न शुद्धिमेतीति मतं ममैतत् ॥ २९
गङ्गादितीर्थेषु वसन्ति जीवा देवालये पक्षिगणाश्च नित्यम् ।
विनाशमायान्ति कृतोपवासा भावोज्झिता नैव गतिं लभन्ते ॥ ३०
भावं ततो हृत्कमले निधाय श्रीमाधवं माधवमासि भक्त्या ।
यजेत यः स्नानपरो विशुद्धः पुण्यं न शक्ता वयमस्य वक्तुम् ॥ ३१
प्रज्वाल्य वह्निं घृततैलसिक्तं प्रदक्षिणावर्तशिखं स्वकाले ।
प्रविश्य दग्धः किल भावदुष्टो[5] न स्वर्गमाप्नोति फलं न चान्यत् ॥ ३२

द्धतस्त्व भूप तस्मात्त्वं माधवस्य फलं प्रति । स्वल्पं चापि शुभं कर्म विकर्मशतनाशनम् ॥ ३३

यथा हरेर्नामभयेन भूप नश्यन्ति सर्वे दुरितस्य वृन्दाः ।
नूनं रवौ मेषगते विभाते स्नानेन तीर्थे च हरिस्तवेन ॥ ३४

जसा वैनतेयस्य पाप्मानः पन्नगा इव । विद्रवन्ति च वैशाखस्नानेनोषसि निश्चितम् ॥ ३५

१ ख. ञ. °हमासोऽयं पु° । २ ख. ञ. °यः । वचः पापस्य महतः क्षयो । ३ घ. ञ. °द्भाविक° । ४ ङ. च. छ. झ. ोकैः । ५ ख. ञ. भावयुक्तो ।

गङ्गायां नर्मदायां वा स्नात्वा मेषगते रवौ । पापप्रशमनं स्तोत्रं यः पठेद्भक्तिभावतः ॥
एककालं द्विकालं वा त्रिसंध्यमपि भूपते । स याति परमं स्थानं सर्वपापविवर्जितः ॥
एतत्ते सर्वमाख्यातमम्बरीष समासतः । वैशाखस्नानमाहात्म्यं किमन्यच्छ्रोतुमिच्छसि ॥

इति श्रीमहापुराणे पाद्मे पातालखण्डे वैशाखमाहात्म्ये सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१६६१९

---

अथाष्टाशीतितमोऽध्यायः ।

---

अम्बरीष उवाच—

पापप्रशमनं स्तोत्रं श्रोतुमिच्छामि ते मुने । यस्य स्मरणमात्रेण पापराशिर्विलीयते ॥
धन्योऽस्म्यनुगृहीतोऽस्मि श्रावितोऽस्मि शुभं विधिम् । विकर्मोत्पतितं यस्य श्रवणादेव हीयते

चित्रं किमत्र मधुसूदन दैवतस्य स्नानस्य पुण्यसवनैरिह माधवस्य ॥
स्नानैरवश्यविहितैरघराशिनाशः स्यादस्य नामपठनादपि तस्य लोकः ॥
तदेव पुण्यं परमं पवित्रं हृद्यं च लोके सुकृतैकलभ्यम् ।
यदुच्यते केशवनामधेयं मन्ये मुने माधवमासि भव्यम् ॥
धन्यास्तु ते माधवमासि नाम स्मरन्ति येऽहो मधुसूदनस्य ।
तस्यैव मे किंचिदतश्चरित्रं पुनः पवित्रं वद मन्यसे चेत् ॥

सूत उवाच—

वचः समाकर्ण्य हरिप्रियस्य प्रीतो मुनिस्तस्य नृपोत्तमस्य ।
तन्माधवस्नानसमुत्सुकोऽपि कथा रसेनाऽऽह स माधवस्य ॥

नारद उवाच—

मन्ये महीपाल मिथो मुकुन्दकथारसालापविधिर्विशुद्धः ॥
त्वया समो(मं) माधवमासधर्मस्नानाधिकोऽयं हरिदैवतस्य ॥

जीवितं यस्य धर्मार्थे धर्मो हर्यर्थमेव च । अहोरात्राणि पुण्यार्थं तं मन्ये वैष्णवं भुवि ॥
किंचिद्वक्ष्यामि ते राजन्वैशाखस्नानजं फलम् । अस्मत्पिताऽपि नो वक्तुमलं विस्तरतोऽखिलम्
यत्र मज्जनमात्रेण पापा मुक्तिमुपागताः । पुरा तीर्थप्रसङ्गेन भ्रमन्कोऽपि मुनीश्वरः ॥
मुनिशर्मेति विख्यातो धर्मात्मा सत्यवाक् शुचिः। युक्तः शमदमाभ्यां च शान्तिधर्मेण संयुतः
युक्तश्च पितृकार्येषु श्रुतिस्मृतिविधानवित् । युक्तो मधुरवाक्येषु संयुक्तो हरिपूजने ॥
युक्तो वैष्णवसंसर्गे त्रिकालज्ञानवान्मुनिः । दयालुरतितेजस्वी तत्त्वविद्ब्राह्मणप्रियः ॥
माधवे मासि रेवायां स्नानार्थं प्रतिसंचरन् । अग्रतः पञ्च पुरुषान्ददर्शातीव दुर्गतान् ॥
परस्परस्य संसर्गकारिणः कृष्णविग्रहान् । वटच्छायामुपाश्रित्य समासीनान्महीपते ॥
ईक्षतो दिक्षु सर्वासु दुरितोद्विग्नचेतसः । तानालोक्य द्विजश्रेष्ठश्चिन्तयामास विस्मितः ॥
कुतो ह्येते नरा भीमे विपिने दीनचेष्टिताः । चौरा वा विकृताकारा दृश्यन्ते पापभागिनः ॥

---

१ क. च क्षान्तिरार्जवसं° । ङ. च. छ. ङ. च क्षान्तिसंतोषसं° ।

परं च भाषन्तो भिन्नाञ्जनचयोपमाः । यावदेवं स विप्राग्र्यो विचारयति धीरधीः ॥ १८
दागम्य ते प्रोचुर्बद्धाञ्जलिपुटा मुनिम् ॥ १९

पुरुषा ऊचुः—

भव्यं भवन्तं पुरुषोत्तमं वै मन्यामहे विप्रवर प्रसीद ॥
यदात्मदुःखं च वयं विचार्य विज्ञापयामः शृणु तद्द्विजेन्द्र ॥ २०

न्तः प्रतिष्ठा दीनानां दैवादुद्भूतपाप्मनाम् । आर्तानामार्तिहन्तारो दर्शनादेव साधवः ॥ २१
हं पञ्चालदेशीयः क्षत्रियो नरवाहनः । ब्राह्मणं हतवान्मोहाच्छरेणाध्वनि पापकृत् ॥ २२
शिखासूत्रविहीनश्च तिलकेन विवर्जितः । अटामि जगतीमेतां ब्रह्मघ्नोऽहमिति ब्रुवन् ॥ २३
ब्रह्मघ्नायातिपापाय भिक्षामन्नं (त्वं) प्रदीयताम् । एवं सर्वेषु तीर्थेषु भ्रमन्नत्रास्मि चाऽऽगतः २४
ब्रह्महत्या न मेऽद्यापि प्रयाति मुनिसत्तम । एवं मे वर्षमेकं हि व्यतीतं कुर्वतोऽनघ ॥ २५
ह्यमानस्य पापेन शोकाकुलितचेतसः । चन्द्रशर्माऽपरो विप्रो योऽयं संलक्ष्यते द्विज ॥ २६
रुघाती स तु ब्रह्मन्मोहाकुलितमानसः । निवसन्मागधे देशे संत्यक्तः स्वजनैस्ततः ॥ २७
वादसावपि मुने भ्रमन्निह समागतः । शिखासूत्रविहीनश्च विप्रलिङ्गविवर्जितः ॥ २८
मया तु वृत्तान्तं सत्यमेवावदद्द्विज । वसता यद्गुरोर्गेहे क्रोधाकुलितचेतसा ॥ २९
मोहगतेनापि यथा वै घातितो गुरुः । तेन पापेन दग्धोऽसौ वर्तते शोकपीडितः ॥ ३०
योऽयं पुनः स्वामिन्देवशर्मा श्रमार्दितः । सुरापो ब्राह्मणो जातो मोहाद्वेश्याप्रसङ्गतः ॥ ३१
मयाऽयमपि मे यथावृत्तं न्यवेदयत् । आत्मनश्चेष्टितं पूर्वमन्तस्तापेन पीडितः ॥ ३२
तः सर्वलोकैश्च भार्याबन्धुजनैरपि । तेन पापेन संयुक्तो भ्रमन्नत्रायमागतः ॥ ३३
विधरो नाम वैश्योऽयं गुरुतल्पगः । मोहान्मासत्रयं यावद्वेश्याभूतां च मातरम् ॥ ३४
स विदेहस्थां ज्ञाततत्त्वस्ततश्चरन् । दुःखितोऽभ्यागतश्चात्र भ्रममाणो महीं मुने ॥ ३५
ऽयं महापापी पापिसंसर्गकारकः । प्रत्यहं धनलोभेन चौर्यादि कृतवान्बहु ॥ ३६
ऽसौ पातकैः क्रान्तस्ततस्त्यक्तो जनैः स्वयम् । निर्विण्णमानसो दैवान्नन्दनामेह संगतः ॥ ३७
श्चापि पापिष्ठाः स्थानमेकमुपागताः । कः कस्यापि न संपर्कं भोजनाच्छादनादपि ॥ ३८
च महाभाग विना वार्तां द्विजोत्तम । विशन्त्येकासने नैव न स्वपन्त्येकसंस्तरे ॥ ३९
दुःखसमाक्रान्ता नानातीर्थेषु वै गताः । नास्माकं पातकं घोरं प्रयाति मुनिसत्तम ॥ ४०
भवन्तं दीप्यन्तं प्रसन्नानि मनांसि नः । वदन्ति दुरितमान्तं साधोस्ते पुण्यदर्शनात् ॥ ४१
वद नः स्वामिन्यथा पापक्षयो भवेत् । ज्ञायसे करुणोऽस्माभिस्त्वं तु वेदार्थवित्प्रभो ॥ ४२
नां मार्गमाणानां दुःखच्छेदमुपागतः । मोहादवाप्तपापानां त्वमुद्धर्ताऽसि निश्चितम् ॥ ४३

नारद उवाच—

वं वचः श्रुत्वा मुनिशर्मा द्विजोत्तमः । इदमाह विचार्यैतान्करुणावरुणालयः ॥ ४४

मुनिशर्मोवाच—

अज्ञानतः प्राप्ताः पापानि सत्यभाषिणः । अनुतापयुता यस्मादनुग्राह्या मया ततः ॥ ४५
सर्वं मद्वचः सत्यमूर्ध्वबाहुर्वदाम्यहम् । [*यन्मयाऽङ्गिरसः पूर्वं श्रुतं मुनिसमागमे ॥ ४६

* धनुश्चिह्नान्तर्गतं ज. ञ. पुस्तकयोर्नास्ति ।

१ ङ. च. छ. ड. विधुरो । २ ज. ञ. °खच्छिद्रमु° ।

तद्दृष्टं वेदशास्त्रेषु सर्वेषां प्रत्ययावहम्] । विष्णुनाऽऽराधितेनाऽऽदौ स्वयमुक्तं च तत्त्वतः ॥
न तृप्तिरशनादन्या न गुरुर्जनकात्परः । न पात्रमन्यद्विप्रेभ्यो न देवः केशवात्परः ॥
न गङ्गया समं तीर्थं न दानं सुरभीसमम् । न गायत्र्या समं जाप्यं नैकादश्या समं व्रतम् ।
न भार्यया समं मित्रं न च धर्मो दयासमः । न स्वातन्त्र्यसमं सौख्यं गार्हस्थ्याच्चाऽऽश्रमः
न सत्यात्पर आचारो न संतोषसमं सुखम् । न माधवसमो मासो महापापहरः परः ॥
विधिनाऽनुष्ठितो भक्त्या मधुसूदनवल्लभः । गङ्गादिषु च तीर्थेषु विशेषेण सुदुर्लभः ॥
प्रायश्चित्तानि सर्वाणि वाजिमेधमुखान्यपि । तावद्गर्जन्ति पापिष्ठा यावन्नाऽऽयाति माधवः ॥
वैशाखे ह्यलखे(खले) मासि यः स्नायाद्दुरितत्परः । हरिपादसमुद्भूते सलिले विमलाशयः ॥
स एव सर्वपापैस्तु मुक्तो यायात्परां गतिम् ॥
मासे तु वै माधवसंज्ञकेऽस्मिन्यः स्नाति पापैः स विमुच्यते हि ।
मेषस्थिते भास्वति नर्मदायाः शर्मप्रदे वारिणि वारितापे ॥
दुर्लभा हि महानद्यो माधवे मासि सर्वतः । ततोऽपि दुर्लभा गङ्गा यमुना चापि नर्मदा ॥
पापास्त्वेतासु तिसृषु प्राप्यैकामपि सादरम् । यः स्नाति माधवे मासि विपापः स हरिं व्रजेत्
तस्मादहो सह मया सुकृतैकसारे वैशाखमासि च भवन्त उपेत्य रेवाम् ॥
मज्जन्तु पातककृतो मुनिवृन्दजुष्टे रेवाजले निखिलपापभयापहत्यै ॥
एवमुक्तास्ततः सर्वे मुदिता मुनिना सह । जग्मुस्ते पापिनो रेवां शंसन्तोऽद्भुतकारिणीम् ॥
द्विजस्तु नर्मदातीरं संप्राप्य हृष्टमानसः । सस्नौ वेदोक्तविधिना प्रातःकाले नराधिप ॥
ते पापिनः पञ्च यदैव रेवाजले निमग्ना वचसैव तस्य ।
श्रीमाधवे मासि विवर्णदेहाः सद्यः सुवर्णैकरुचो बभूवुः ॥
पापप्रशमनं स्तोत्रं श्राविता मुनिशर्मणा । समक्षं सर्वलोकानां जातास्ते वरकान्तयः ॥
तत्रस्था मानवास्तांस्तु विरजान्स्नानमात्रतः । न स्पृशन्ति च राजेन्द्र पापिसंसर्गशङ्कया ॥
मुनिशर्मानुरोधेन ततो धर्मप्रमाणतः । सद्यो दिव्याऽभवद्वाणी यदैते विगतैनसः ॥
स्नातानां माधवे मासि [*मुकुन्दहृदयात्मनाम् । पापप्रशमनं स्तोत्रं शृण्वतामिह सादरम् ॥
सर्वेषामेव पापानां प्रायश्चित्तमिदं परम् । यत्प्रातर्माधवे मासि] भक्त्या तीर्थावगाहनम् ॥
इत्येवमाकर्ण्य गिरं नभस्थामत्यद्भुतामाशु ततो मनुष्याः ।
शशंसुरेतानपि पञ्च पुण्यान्वैशाखमासं च मुनिं च रेवाम् ॥
अथाऽऽकर्णय भूपाल स्तवं दुरितनाशनम् । यमाकर्ण्य नरो भक्त्या मुच्यते पापराशिभिः
यस्य स्मरणमात्रेण पापिनः शुद्धिमागताः । अन्येऽपि बहवो मुक्ताः पापादज्ञानसंभवात् ॥
परदारपरद्रव्यजीवहिंसादिके यदा । प्रवर्तते नृणां चित्तं प्रायश्चित्तं स्तुतिस्तदा ॥
विष्णवे विष्णवे नित्यं विष्णवे विष्णवे नमः । नमामि विष्णुं चित्तस्थमहंकारगतं हरिम् ॥
चित्तस्थमीशमव्यक्तमनन्तमपराजितम् । विष्णुमीड्यमशेषाणामनादिनिधनं हरिम् ॥
विष्णुश्चित्तगतो यन्मे विष्णुर्बुद्धिगतश्च यत् । योऽहंकारगतो विष्णुर्यो विष्णुर्मयि संस्थितः ॥

* धनुश्चिह्नान्तर्गतः पाठो ङ. च. छ. ड. पुस्तकस्थः ।

१ ङ. च. छ. ड. °स्य श्रवण° ।

ति कर्तृभूतोऽसौ स्थावरस्य चरस्य च । तत्पापं नाशमायाति तस्मिन्विष्णौ विचिन्तिते ७५
ो हरति यः पापं स्वप्ने दृष्टश्च पापिनाम् । तमुपेन्द्रमहं विष्णुं नमामि प्रणतप्रियम् ॥ ७६
स्मिन्निरालम्बे ह्यजमक्षरमव्ययम् । हस्तावलम्बनं स्तोत्रं विष्णुं वन्दे सनातनम् ॥ ७७
ेश्वर विभो परमात्मन्नधोक्षज । हृषीकेश हृषीकेश हृषीकेश नमोऽस्तु ते ॥ ७८
हानन्त गोविन्द भूतभावन केशव । दुरुक्तं दुष्कृतं ध्यातं शमयाऽऽशु जनार्दन ॥ ७९
मया चिन्तितं दुष्टं स्वचित्तवशवर्तिना । आकर्णय महाबाहो तच्छमं नय केशव ॥ ८०
ण्य देव गोविन्द परमार्थपरायण । जगन्नाथ जगद्धातः पापं शमय मेऽच्युत ॥ ८१
ापराह्णे सायाह्ने मध्याह्ने च तथा निशि । कायेन मनसा वाचा कृतं पापमजानता ॥ ८२
ानता च हृषीकेश पुण्डरीकाक्ष माधव । [*नामत्रयोच्चारणतः सर्वं यातु मम क्षयम् ॥ ८३
ारीरं मे हृषीकेश पुण्डरीकाक्ष मानसम् । पापं प्रशममायातु वाक्कृतं मम माधव] ॥ ८४
द्भुञ्जानः पिबंस्तिष्ठन्स्वपञ्जाग्रन्यदा स्थितः । अकार्षं पापमर्थार्थं कायेन मनसा गिरा ॥ ८५
हदल्पं च यत्पापं दुर्योनिनरकावहम् । तत्सर्वं विलयं यातु वासुदेवस्य कीर्तनात् ॥ ८६
रं ब्रह्म परं धाम पवित्रं परमं च यत् । अस्मिन्संकीर्तिते विष्णौ यत्पापं तत्प्रणश्यतु ॥ ८७
्य न निवर्तन्ते गन्धस्पर्शविवर्जितम् । सूरयस्तत्पदं विष्णोस्तत्सर्वं मे भवत्वलम् ॥ ८८
शमनं स्तोत्रं यः पठेच्छृणुयान्नरः । शारीरैर्मानसैर्वाचा कृतैः पापैः प्रमुच्यते ॥ ८९
पापग्रहादिभ्यो याति विष्णोः परं पदम् । तस्मात्सर्वप्रयत्नेन स्तोत्रं सर्वाघनाशनम् ॥ ९०
श्चित्तमघौघानां पठितव्यं नरोत्तमैः । प्रायश्चित्तैः स्तोत्रजपैर्व्रतैर्नश्यति पातकम् ॥ ९१
कार्याणि संसिद्ध्यै तानि वै भुक्तिमुक्तये । पूर्वजन्मार्जितं पापमैहिकं च नरेश्वर ॥ ९२
स्य श्रवणादस्य सद्य एव विलीयते । पापद्रुमकुठारोऽयं पापेन्धनदवानलः ॥ ९३
ाशितमस्तोमभानुरेष स्तवो नृप । मया प्रकाशितस्तुभ्यं तथा लोकानुकम्पया ॥ ९४
ऽयं यो मया प्राप्तो रहस्यं पितुरादरात् । इति ते यन्मया प्रोक्तं स्तोत्रं पापप्रणाशनम् ९५
पि पुण्यमाहात्म्यं वक्तुं शक्तः स्वयं हरिः । स्वस्ति तेऽस्तु गमिष्यामि गङ्गायामथ सत्वरम्
मासः समायातो मासानां माधवो महान् ॥ ९६

इति श्रीमहापुराणे पाद्मे पातालखण्डे वैशाखमाहात्म्येऽष्टाशीतितमोऽध्यायः ॥ ८८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१६७११

---

अथैकोननवतितमोऽध्यायः ।

---

सूत उवाच—
समुद्यतं ज्ञात्वा मुनिं राजा ततो मुदा । विधिं पप्रच्छ संक्षिप्तं स्नानदानकथोचितम् ॥ १
अम्बरीष उवाच—
वैशाखमासेऽस्मिन्को विधिः किं तपोऽधिकम् । किंच दानं कथं स्नानं कथं केशवपूजनम् ॥
या वद विप्रर्षे सर्वज्ञस्त्वं हरिप्रियः । विशेषतोऽपि पूजाया विधिं तीर्थपदो वद ॥ ३

---

* धनुश्चिह्नान्तर्गतः पाठो झ. च. छ. ड. पुस्तकस्थः ।

---

१ झ. °स्य श्राव° ।

नारद उवाच—
मेषसंक्रमणे भानोर्माधवे मासि सत्तम । महानद्यां नदीतीर्थे नदे सरसि निर्झरे ॥
देवखाते तथा स्नायाद्यथाप्राप्ते जलाशये । दीर्घिकासु च कूपादौ नियमेन हरिं स्मरन् ॥
मधुमासस्य शुक्लायामेकादश्यामुपोषयेत् । पञ्चदश्यां ततो धीरो मेषसंक्रमणेऽपि वा ॥
वैशाखस्नाननियमं ब्राह्मणानामनुज्ञया । मधुसूदनमभ्यर्च्य कुर्यात्सुस्नानपूर्वकम् ॥
वैशाखमखिलं मासं मेषसंक्रमणे रवेः । प्रातः सनियमस्नानात्प्रीयतां मधुसूदनः ॥
[*मधुहन्तुः प्रसादेन ब्राह्मणानामनुग्रहात् । निर्विघ्नमस्तु मे पुण्यं वैशाखस्नानमन्वहम् ॥
माधवे मेषगे भानौ मुरारे मधुसूदन । ] प्रातःस्नानेन मे नाथ यथोक्तफलदो भव ॥
यथा ते माधवो मासो वल्लभो मधुसूदन । प्रातःस्नानेन मे तस्मिन्फलदः पापहा भव ॥
एवमुच्चार्य तत्तीर्थे पादौ प्रक्षाल्य वाग्यतः । स्मरन्नारायणं देवं स्नानं कुर्याद्विधानतः ॥
तीर्थं प्रकल्पयेद्विद्वान्मूलमन्त्रमिमं पठन् । ॐनमो नारायणाय मूलमन्त्र उदाहृतः ॥
दर्भपाणिस्तु विधिवदाचान्तः प्रणतो भुवि । चतुर्हस्तसमायुक्तं चतुरस्रं समन्ततः ॥
प्रकल्प्याऽऽवाहयेद्गङ्गां मन्त्रेणानेन वै नरः । विष्णुपादप्रसूताऽसि वैष्णवी विष्णुदेवता ॥
त्राहि नस्त्वेनसस्तस्मादाजन्ममरणान्तिकात् । तिस्रः कोट्योऽर्धकोटी च तीर्थानां वायुरब्रवी
दिवि भुव्यन्तरिक्षे च तानि ते सन्ति जाह्नवि । नन्दिनीति च ते नाम वेदेषु नलिनीति च
दक्षा पृथ्वी वियद्गङ्गा विश्वकाया शिवाऽमृता । विद्याधरी महादेवी तथा लोकप्रसादिनी ।
क्षेमंकरी जाह्नवी च शान्ता शान्तिप्रदायिनी । एतानि पुण्यनामानि स्नानकाले प्रकीर्तयेत् ।
भवेत्संनिहिता तेन गङ्गा त्रिपथगामिनी । सप्तवाराभिजप्तेन करसंपुटयोजिता ॥
मूर्ध्नि बद्धाञ्जलिर्भूत्वा चतुर्वा[1] षट्च सप्त वा । स्नानं कृत्वा मृदा तद्वदामन्त्र्य तु विधानतः
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुंधरे । मृत्तिके हर मे पापं यन्मया पूर्वसंचितम् ॥
उद्धृताऽसि वराहेण विष्णुना शतबाहुना । नमस्ते सर्वलोकानां प्रभवारणि सुव्रते ॥
एवं स्नात्वा ततः पश्चादाचम्य तु विधानतः । उत्थाय वाससी शुक्ले शुद्धे तु परिधापयेत् ।
ततस्तु तर्पणं कुर्यात्त्रैलोक्याप्यायनाय वै । ब्रह्माणं तर्पयेत्पूर्वं विष्णुं रुद्रं प्रजापतिम् ॥
देवान्यक्षांस्तथा नागान्गन्धर्वाप्सरसोऽसुरान् । क्रूरान्सर्पान्सुपर्णांश्च तरूंन्वै जन्तुकान्खगान
विद्याधराञ्जलधरांस्तथैवाऽऽकाशगामिनः । निराधाराश्च ये जीवाः पापकर्मरताश्च ये ॥
तेषामाप्यायनार्थाय दीयते सलिलं मया । कृत्वोपवीती(तं) देवेषु निवीती च भवेन्नरः ॥
मनुष्यांस्तर्पयेद्भक्त्या ऋषिपुत्रानृषींस्तथा । सनकः सनन्दनश्चैव तृतीयश्च सनातनः ॥
सनत्कुमारश्च तथा कपिलश्चाऽऽसुरिश्च वै । वोढुः पञ्चशिखस्तद्वन्मुख्या ऋषिसुता इमे ॥
सर्वेऽपि तृप्तिमायान्तु मया दत्तेन वारिणा । मरीच्य(चिम)त्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ।
प्रचेतसं वसिष्ठं च भृगुं नारदमेव च । देवब्रह्मऋषीन्सर्वांस्तर्पयेदक्षतोदकैः ॥
अपसव्यं ततः कुर्यात्सव्यं जान्वाच्य भूतले । अग्निष्वात्तास्तथा सौम्या हविष्मन्तस्ततोष्मप
कव्यानलान्बर्हिषदस्तथा मातामहानपि । संतर्प्य विधिवत्सर्वानिमं मन्त्रमुदीरयेत् ॥
येऽबान्धवा बान्धवा येऽप्यन्यजन्मनि बान्धवाः । ते तृप्तिमखिला[2] यान्तु येऽस्मत्तस्तोयकाङ्क्षि

* धनुश्चिह्नान्तर्गतः पाठो ङ. च. छ. ड. पुस्तकस्थः ।

१ झ. °र्वा सप्त षड्वा । अ. °र्वा सप्तषट्पदा । स्ना° । २ झ. म. °खिलां या° ।

य विधिवत्पश्चादालिखेत्पद्ममग्रतः । साक्षतैश्च सपुष्पैश्च सलिलारुणचन्दनैः ॥ ३६
ध्यात्प्रयत्नेन सूर्यनामानुकीर्तनैः । नमस्ते विष्णुरूपाय नमस्ते ब्रह्मरूपिणे ॥ ३७
मये नित्यं नमस्ते सर्वतेजसे । नमस्ते रुद्रवपुषे नमस्ते भक्तवत्सल ॥ ३८
नमस्तेऽस्तु कुण्डलाङ्गदभूषित । नमस्ते सर्वलोकानां सुप्तानामुपबोधन ॥ ३९
दुष्कृतं चैव सर्वं पश्यसि सर्वदा । सत्यदेव नमस्तेऽस्तु प्रसीद मम भास्कर ॥ ४०
र नमस्तेऽस्तु प्रभाकर नमोऽस्तु ते । एवं सूर्यं नमस्कृत्य सप्तधा तु प्रदक्षिणम् ॥ ४१
ां काञ्चनं स्पृष्ट्वा पश्चाच्च स्वगृहं व्रजेत् । आश्रमस्थांश्च संपूज्य प्रतिमां चापि पूजयेत् ॥ ४२
त्वा च गोविन्दं गृहे च नियतात्मवान् । पूजयेद्भक्तितो राजन्नुभयत्र यथाविधि ॥ ४३
दपि वैशाखे योऽर्चयेन्मधुसूदनम् । सर्वसंवत्सरं यावदर्चितस्तेन माधवः ॥ ४४
मासि संप्राप्ते मेषस्थे कर्मसाक्षिणि । केशवप्रीतये कुर्यात्केशवव्रतसंचयम् ॥ ४५
कदानानि तिलाज्यप्रभृतीनि च । जन्मकोटिसमुद्भूतपातकान्तकराणि च ॥ ४६
र्कराधेनुतिलधेनुमुखानि च । वित्तशाठ्यविवर्ज्यानि दानानीप्सितसिद्धये ॥ ४७
सकलं मासं नित्यस्नायी जितेन्द्रियः । जपन्हविष्यं भुञ्जानः सर्वपापैः प्रमुच्यते ॥ ४८
कमथो नक्तमयाचितमतन्द्रितः । माधवे मासि यः कुर्यात्स लभेत्सर्वमीप्सितम् ॥ ४९
विधिवत्स्नानद्वयं नद्युदके बहिः । हविष्यं ब्रह्मचर्यं च भूशय्या नियमस्थितिः ॥ ५०
नं जपो होमो मधुसूदनपूजनम् । अपि जन्मसहस्रोत्थं पापं हरति दारुणम् ॥ ५१
ाधवो ध्यातो विनाशयति किल्बिषम् । तथैव माधवे स्नानं नियमेन विनिर्मितम् ॥ ५२
ानुदिनं स्नानं तिलैश्च पितृतर्पणम् । दानं धर्मघटादीनां मधुसूदनपूजनम् ॥ ५३
मासि कुर्वीत मधुसूदनतुष्टिदम् । तिलोदकसुवर्णान्नशर्कराम्बररोहिणीः ॥ ५४
ातपत्राब्जं कुम्भान्दद्याद्द्विजातिषु । त्रिसंध्यं पूजयेदीशं भक्त्या च मधुसूदनम् ॥ ५५
मलया लक्ष्म्या समुपेतं समाहितः । सुवर्णतिलपात्रैश्च ब्राह्मणाञ्शक्तितो बहून् ॥ ५६
धपात्रैर्यो ब्रह्महत्यां व्यपोहति । वैशाखे मासि यः स्नात्वा प्रातर्नद्यां समाहितः ॥ ५७
वा हरिं भक्त्या पुष्पैः कालोद्भवैः फलैः । पूजयेद्ब्राह्मणाञ्शक्त्या पाषण्डालापवर्जितः ५८
गोदानैः रत्नाद्यैर्धनसंचयैः । यश्चापि निःस्वपुरुषो माधवे मासि माधवम् ॥ ५९
विधानेन पूजयेन्मधुसूदनम् । सर्वपापविनिर्मुक्तो याति सोऽपि परं पदम् ॥ ६०
वित्तं यथाशक्त्या स्तोकं स्तोकं समाचरेत् । स जन्मशतसाहस्रं न शोकफलभाग्भवेत् ६१
याधिभयं तस्य न दारिद्र्यं न बन्धनम् । स विष्णुभक्तो जायेत धन्यो जन्मनि जन्मनि ॥
गसहस्राणि शतमष्टोत्तरं भवेत् । तावत्स्वर्गे वसेद्धीरो भूपतिश्च पुनर्भवेत् ॥ ६३
तैर्विविधान्भोगान्भुक्त्वा चैव यथासुखम् । माधवस्य प्रसादेन माधवे लीयते ततः ॥ ६४

इति श्रीमहापुराणे पाद्मे पातालखण्डे वैशाखमाहात्म्य एकोननवतितमोऽध्यायः ॥ ८९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१६७७५

अथ नवतितमोऽध्यायः ।

नारद उवाच—

राजेन्द्र वक्ष्यामि समासान्माधवार्चनम् । वैदिकं तान्त्रिकं चापि मिश्रकं पापनाशनम् ॥ १

१ ख. ङ. च. छ. ढ. °तोऽन्वहम् । त° ।

अनन्तानन्तपारस्य नान्तः पूजाविधेर्नृप । अथ संक्षिप्य चोच्येत यथावदनुपूर्वशः ॥
वैदिकस्तान्त्रिको मिश्रः श्रीविष्णोस्त्रिविधो मखः । त्रयाणामुदितेनैव विधिना हरिमर्चयेत्
वैदिको मिश्रको वाऽपि विप्रादीनामुदाहृतः । तान्त्रिको विष्णुभक्तस्य शूद्रस्यापि प्रकीर्तित
यथास्वनिगमेनोक्तं विधित्वं प्राप्य पूरुषः । यजेच्च विधिवद्विष्णुं ब्रह्मचारी समाहितः ॥
अर्चयेत्स्थण्डिले वाऽग्नौ सूर्ये स्वहृदि वा द्विजे । द्रव्येण भक्तियुक्तोऽर्चेत्स्वगुरुं तदनुज्ञया
पूर्वं स्नानं प्रकुर्वीत धौतदन्तोऽङ्गशुद्धये । उभयो(यै)रपि च स्नानं मन्त्रैर्मृद्ग्रहणादिना ॥
संध्योपासनकर्माणि वेदतन्त्रोदितानि च । पूजान्ते कल्पयेत्सम्यक्संकल्पं कर्मपावनम् ॥
[*शैली धातुमयी लौही लेप्या लेख्या च सैकती । मनोमयी मणिमयी प्रतिमाऽष्टविधा ।
चराऽचरेति द्विविधा प्रतिष्ठा जीवमन्दिरम्] ॥
उद्वासावाहने न स्तः स्थिरायां केशवार्चने । अस्थिरायां विकल्पः स्यात्स्थण्डिले तु भवेद्द्वय
स्नापनं त्वविलेख्यायामन्यत्र परिमार्जनम् । द्रव्यैः प्रसिद्धैर्देवार्चा प्रतिमादिष्वमायया ॥
भक्तस्य च यथालब्धैर्भक्तिभावेन चैव हि । स्नानालंकरणं चेष्टमर्चायामेव भूपते ॥
श्रद्धयोपहृतं श्रेष्ठं कृष्णभक्तेन वार्यपि । गन्धो धूपं(पः) सुमनसो दीपोऽन्नाद्यं च किं पुनः
शुचिः संभृतसंभारः प्राग्दर्भैः कल्पितासनः । आसीनश्च ह्युदग्वक्त्रो ह्यर्चायामथ संमुखः ।
कृतन्यासः कृतन्यासां हर्यर्चां पाणिना स्पृशेत् । कलशं प्रोक्षणीयं च यथावदुपसादयेत् ॥
तदद्भिर्देवयजनं द्रव्याण्यात्मानमेव च । प्रोक्ष्य पात्राणि त्रीण्यद्भिस्तैस्तैर्द्रव्यैश्च सादयेत् ॥
पाद्यार्घ्याचमनीयार्थे त्रीणि पात्राणि दापयेत् । हृतशीर्ष्णा च शिखया गायत्र्या चाभिमन्त्रये
पिण्डे वाय्वग्निसंशुद्धे हृत्पद्मस्थां परां विभो । अण्वीं जीवकलां ध्यायन्नादान्ते सिद्धभाविताम् ।
तयाऽऽत्मभूतया पिण्डव्याप्ते संपूज्य तन्मयः । आवाह्यार्चादिषु स्थाप्य न्यस्ताङ्गां तां प्रपूजयेत् ।
पाद्यार्घस्नानार्हणादीनुपचारान्प्रकल्पयेत् । धर्मादिभिश्च नवभिः कल्पयित्वाऽऽसनं हरेः ॥
पद्ममष्टदलं तत्र कर्णिकाकेसरोज्ज्वलम् । उभाभ्यां वेदतन्त्राभ्यां हरेरुभयसिद्धये ॥
सुदर्शनं पाञ्चजन्यं गदासीषुधनुर्हलान् । मुसलं कौस्तुभं मालां श्रीवत्सं चापि पूजयेत् ॥
नन्दोपनन्दं गरुडं प्रचण्डं चण्डमेव हि । बलं महाबलं चैव मुकुन्दं कुमुदेक्षणम् ॥
दुर्गां विनायकं व्यासं विष्वक्सेनं गुरून्सुरान् । स्वस्वस्थानेष्वभिमुखान्पूजयेत्प्रोक्षणादिभिः ॥
चन्दनोशीरकर्पूरकुङ्कुमागरुवासितैः । सलिलैः स्नापयेन्मन्त्रैर्नित्यदा विभवे सति ॥
स्वर्णघर्मानुवाकेन महापुरुषविद्यया । पौरुषेणापि सूक्तेन सामनीराजनादिभिः ॥
वस्त्रोपवीताभरणस्रग्गन्धाद्यनुलेपनैः । अलं कुर्वीत सप्रेमविष्णुभक्तो यथोचितम् ॥
पाद्यमाचमनीयं च गन्धं सुमनसोऽक्षतान् । गन्धधूपोपहारांश्च दद्याद्वै श्रद्धयाऽर्चकः ॥
गुडपायससर्पींषि शष्कुल्यपूपमोदकान् । नैवेद्यं दधिदुग्धानि नैकसंज्ञानि कल्पयेत् ॥
अभ्यङ्गोन्मर्दनादर्शदन्तधावाभिषेचनम् । अन्नाद्यं नृत्यगीतादि पर्वण्यप्यन्वहं नृप ॥
विधिना विहिते कुण्डे मेखलावर्तवेदिभिः । अग्निमाधाय परितः समूहेत्पाणिनोदकम् ॥
परिस्तीर्याथ पर्युक्ष्य दत्त्वेध्मं च यथाविधि । प्रोक्षण्याऽऽसाद्य द्रव्याणि प्रोक्ष्याग्नावाज्यसेचनम्
तप्तजाम्बूनदप्रख्यं शङ्खचक्रगदाम्बुजैः । लसच्चतुर्भुजं शान्तं पद्मकिञ्जल्कवाससम् ॥

* धनुश्चिह्नान्तर्गतः पाठो ङ. च. छ. ढ. पुस्तकस्थः ।

१ ङ. च. छ. ढ. अतः । २ ग. °माद्यन्ते । ३ झ. ग. °तपिण्डा ये व्या° । ४ ङ. च. छ. ढ. कुमुदं ।

चेद्गैरवश्चेह तिष्ठति ब्रह्मराक्षसः । न सोऽपि चेन्महाबाधा राज्ञां तत्र भविष्यति ॥ ११
जानाति चेद्राजा व्यवहारादिसंभवः । स चेद्दृढप्रकारेण चोरबाधा भविष्यति ॥ १२
तस्य भवतो महानर्थो भविष्यति । प्रायेणार्थवतां नृणां भोगलिप्सोपजायते ॥ १३
द्भोगान्तरेच्छा च सर्वानुष्ठाननाशिनी । जानाति यदि नारी स्वं भावयोगगतं तथा ॥ १४
स्वतन्त्रतामेति रोषाल्लब्धप्रकाशिनी । रोषेऽविश्वासतां याति तदा दोषः पुरोदितः ॥ १५
ासिनि च विश्रम्भः प्रवासे चान्यचित्तता । विश्रम्भाज्जायते स्त्रीणां नानाविधविचेष्टता १६
ंचित्पुरुषं दृष्ट्वा युवानं प्रीतिरापतेत् । प्रीत्या संजायते योगो योगान्मैथुनसंगतिः ॥ १७
तं मैथुने जाते विश्रम्भान्तरमापतेत् । भवता वा तथा पूर्वं भुक्तेदानीं च भुज्यते ॥ १८
प्रतीच्छा तवेदानीं प्रीतिः कस्यामथापि वा । का विदग्धा सुसंश्लिग्धा पुरुषादन्यतश्चरेत् १९
ऽब्रवीदथ वाक्यं तां यदि ब्रूयात्त्वमध्यसे(द्य मे) । सर्वमेव तथा वच्मि नान्यथा वाक्यमुच्यते ॥
र्थं प्रहृष्टतां याता तथा रूपान्तरेण च । द्रव्यमादाय यत्किंचिदनुवर्तेत्स्वतन्त्रतः ॥ २१
मारयित्वा तां द्रव्यं गृहीत्वा पातयिष्यति । अथ पूर्वपतिमृतौ प्रविशेत्साऽऽशुशुक्षणिम् ॥ २२
धव्ये द्रविणं सर्वं भुक्तेदानीं च भुज्यते । इति निश्चित्य मनसा वैधव्ये समुपस्थिते ॥ २३
ोमिकण्डूं समासाद्य दिवा वा यदि वा निशि । एकान्तस्थानमभ्येत्य विवृत्य वसनं भगम् २४
मूचे वचो दुःखादुपस्थस्थकरा सती । किं त्वया वै कृतं योने किं वा पापमुपाश्रिता ॥ २५
नस्य वाऽथवा पापं यत्त्वदन्तरवेशनात् । यच्चे कर्तृकृतं पापं माद्दक्सेवाविवर्जनात् ॥ २६
तोऽपि कण्डूसंभूतौ प्रवेशयेदथाङ्गुलीम् । विचित्रचेष्टां कृत्वा तु कण्डूबुद्धेरतः परम् ॥ २७
यित्वा कराभ्यां तत्संताड्य च विवृत्य च । असकृच्छुन्वती पादौ विवृतास्याऽतिदुःखिता २८
ाकाष्ठमथाऽऽलिङ्ग्य स्तनपीडं यथाप्रियम् । अथो विचित्रचित्तत्वं ततः प्रद्युष्टता(?)भवेत् ॥२९
वाऽह्नि पुरे स्थित्वा शाकं व्यवहृतं च यत् । आलम्ब्य वेश्मनि निशि संध्यायां विशिखासु च
वाऽन्यवेशमात्मानं यैः कैरप्युपभुज्यते । यथावाच्यप्रभावेन शङ्किता योग्यमाहरेत् ॥ ३१
ातं च गृहं गत्वा रमयेदेव निश्चितम् । नारी समक्षं लब्धे तु द्रविणे ह्येतदिष्यते ॥
ान्ममापि भवतो न विचारप्रयोजनम् ॥ ३२

शौणक उवाच—

ेतत्र संदेहो गच्छ त्वं तिष्ठ दूरतः । मलमूत्रविसर्गार्थे स्थित्वा गच्छाम्यतः परम् ॥ ३३
ां गतायां शौणोऽपि वस्त्रखण्डं त्वकल्पयत् । एकैकस्मिंस्तथा खण्डे त्वग्रहीद्द्रविणं बहु ॥ ३४
ते त्ववरं(टं) जानुदघ्नं कृत्वा ततस्ततः । क्षिप्त्वा धनं पूरयित्वा विष्ठां चक्रे ततोपरि* ॥ ३५
भारं घटं तं च प्रतिचिक्षेप कुत्रचित् । सर्वमज्ञातवत्कृत्वा स्नानाय प्रययौ मुनिः ॥ ३६
भार्या ततः स्नानं कृत्वा संपूज्य पार्वतीम् । गच्छेति भर्त्रा सा प्रोक्ता स्ववेश्माभ्यगमत्सती ॥
ेकाकिनीं ज्ञात्वा मारीचो नाम राक्षसः । भर्तृरूपमथाऽऽस्थाय कलामेतदुवाच ह ॥ ३८

मारीच उवाच—

ोदावरीतीरे पवित्रं पापनाशनम् । द्राक्षाराममिति प्रोक्तं यत्र भीमः स्वयं स्थितः ॥ ३९

* संधिरार्षः ।

१ ग. °योगं ग° । २ ख. ङ. च. छ. ट. ड. °वै धर्मार्थे मे भविष्यति । ह्° । ३ ख. ग. °निकुण्डं स° । ४ ट. °च । ५ ग. प्रद्युष्टली । ६ क. च. छ. ङ. साकं । ७ ग. °ते । अथा° । ८ च. °नुरन्ध्रं कृ° ।

भुक्तिमुक्तिप्रदो नृणां स्मरणात्पापनाशनः । तत्र गच्छावहे शीघ्रं त्वं तु निर्गच्छ सुन्दरि ॥

कलोवाच—

इदानीमभिषेकाय प्रवृत्तो नाभिषिक्तवान् । कथमेतादृशं त्वं हि पूर्वानुक्तं वदिष्यसि ॥
प्रकृतेरन्यथाभावमुत्पातं विदुरुत्तमाः ॥

मारीच उवाच—

भर्तुरप्रतिकूलत्वं नारीणां धर्म उच्यते । प्रतिकूलाऽनुकूला वा मम शीघ्रं वदस्व तत् ॥
तूष्णीं भूत्वाऽथ सा साध्वी भर्तेत्येव विचार्य तम् । निर्ययौ तेन सा बाला वनमध्ये गता सर्त
अथ मध्याह्नकालोऽसौ क्रियतामाह्निकक्रिया । राक्षसोऽथ वचः श्रुत्वा नानुष्ठानस्थलं त्विह ४
यत्र तत्रास्ति गन्तव्यमितो गच्छावहे ततः । किंचित्प्रदेशं गत्वा तु गुहां वीक्ष्य सरस्तथा ॥ ४
इह स्थानं हि मे स्थातुं कार्यं स्नानमथोवदे(द)त् । इत्युक्त्वा सरसि स्नात्वा फलाहारं प्रकल्प्य
भोजनावसरे प्राप्ते कला दध्यावुमां शिवम् । अयं धवो मम न वा इतिध्यानपराऽभवत् ॥ ४
अथ ध्यानेन तं चोरं निश्चित्य च पतिव्रता । भीताऽतिनम्रवदना त्वश्रुपूर्णमुखी तदा ॥ ४
कष्टमापतितं पापमित्युक्त्वा निपपात च । रुदतीं तामथो दृष्ट्वा राक्षसः पापनिश्चयः ॥ ५
धर्षितुं तामथाऽऽरेभे न चैतद्धर्षणं प्रति । बलात्कारमथो कर्तुं पतमाने तु राक्षसे ॥ ५
आजानुनाभिपर्यन्तं शैलं स्थानमकल्पयत् । शिलात्वमैभ(गम)द्दृस्त्रं राक्षसो वीक्ष्य तामथ ॥ ५
इत्येवं तां हनिष्यामि खादयिष्याम्यतः परम् । इत्युक्त्वा भ्रामयित्वाऽसिं शिरश्छेत्तुं प्रचक्रमे
कलाऽहं मत्पतिर्ज्ञात्वा शापं दास्यति मा हर । इत्युक्तमात्रे वचसि शिरश्चिच्छेद राक्षसः ॥ ५
प्राप्तायां दुर्मृतिं तस्यामथ शैवाः समागताः । दूता विचित्राभरणाः सर्वायुधधराः शुभाः ॥ ५
एनां विमानमारोप्य शिवलोकमुपागमन् । तामागतां गिरिसुता हर्षेण [*प्रतिपूज्य च ॥ ५
स्वपादप्रणतां शुद्धामुमा वाक्यमभाषत । पातिव्रत्येन ते तुष्टा त्वभीष्टं प्रददामि ते ॥ ५

कलोवाच—

दासीभावं प्रयच्छ त्वं त्वत्पादाब्जं] मम प्रियम् । प्रार्थ्यैः किमन्यैर्बहुभिस्तथाऽस्त्विति शिवाऽब्रवी
[+इन्द्रादिवनिताभिः सा पूजिताऽथ कलानिधिः । एतस्मिन्नन्तरे प्राप्तः शोणो मुनिरथो गृह
न तत्र दृष्ट्वा तां भार्यां ध्यानयोगपरोऽभवत् । ]रक्षोहृतां मृतां प्राप्तां शिवालोकमुमां प्रति ॥ ६
उमादत्तवरा चापि दृष्टवाञ्ज्ञानचक्षुषा । किंचिद्दुःखमुखश्चित्तं परावृत्य मुनिस्तदा ॥ ६
श्वशुरं गतवान्सोऽथ देवरातं मुनीश्वरः । निवेद्य सर्वं सहितो विश्वामित्रमगान्मुनिम् ॥ ६
निवेद्य तद्वसिष्ठस्य वसिष्ठोऽप्याह तान्मुनीन् । गत्वा कैलासमादौ तु दृष्ट्वा देवं महेश्वरम् ॥ ६
अनुज्ञां शिवतो लब्ध्वा पार्वतीमन्दिरं गतः । देव्यै विज्ञाप्य तत्सर्वं यथार्थं प्रवदामि तत् ॥ ६
तथेत्युक्त्वा मुनिवराः कैलासं शंकरालयम् । गत्वा प्रणम्य देवेशं वीरभद्रेण पूजिताः ॥ ६
विज्ञापयामासुरिदं शोणभार्या हृतेति च । शिवः प्राह मुनीन्द्रांस्ताञ्ज्ञातमेव मया त्विदम् ॥ ६
अकालमरणं तस्या आयुर्वर्षशतं स्थितम् । अकालमृत्युयुक्तानां पुनर्जीवनमस्ति च ॥ ६
दशपुत्रप्रसविनी रूपसौभाग्यवत्यपि । भवद्भिरिति निश्चित्य समागतमिह द्विजाः ॥ ६

* धनुश्चिह्नान्तर्गतः पाठः ख. ङ. च. छ. ट. ड पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः ख. ङ. च छ. ट. ड पुस्तकस्थ

१ झ. ञ. °थावये । इ° । २ ञ. °तद्धर्ष° । ३ ञ. °ममभद्र° । ४ ख. ङ. च. छ. ट. ड. मुनीश्वरम् । ५ °मृ । निवे सर्वं सहितो ।

ोकगतानां तु सर्वमेतद्विनिश्चितम् । मम लोकगतानां च गतिरन्या न विद्यते ॥ ६९
या कीर्तितं नाम प्राणनिर्गमने पुरा । निष्ठा (नष्टा) यमलिपिः स्पष्टा कथमायुष्यनिर्णयः ७०
वा गिरिजायै च निवेदयत कृत्स्नशः । अथ ते पार्वतीपाददर्शनाय गता द्विजाः ॥ ७१
म्य मातरं सर्वे विश्वामित्रोऽब्रवीदिदम् । दीनानाथकृशाभार्यप्रनष्टपितृकाञ्शिशून् ॥ ७२
यित्वा पुरा मातरिष्टदा त्वं सदा प्रभुः । कला पौत्री ममैवेयं त्वामाराध्य पतिं त्वमुम् ॥ ७३
र्यं लब्धवती मातस्त्वत्पूजायाः फलं त्विदम् । तपसा लभ्यते[1]ऽपर्णे दानेन यदि वाऽपि च ॥
ोपवासैरथवा कला सा लभ्यते मया । एतया परिविष्टान्नं भोक्तुमिच्छामि तत्कथम् ॥ ७५

पार्वत्युवाच—

ादृशी चैव ते भार्या तादृशी दीयते मया । नैनां त्यक्तुमहं शक्ता किं वा त्वं मन्यसे मुने ॥ ७६

विश्वामित्र उवाच—

ाता त्वमित्येव मया ह्यविशङ्कितमीरितम् । शोणो मुनिरयं मातस्तव विज्ञापयिष्यति ॥ ७७

शोण उवाच—

ामेव भार्या प्रति मे प्रीतिरत्युत्कटा सति । सैव मे दीयतां भार्या चान्यथा मरणं भवेत् ॥ ७८

पार्वत्युवाच—

ार्यापती समावेव विषमौ तु विगर्हितौ । तव चासदृशी चेयं सदृशीं प्रवदाम्यहम् ॥
। च मन्मन्दिरं प्राप्तां त्यक्ष्ये देहविवर्जिताम् ॥ ७९

शोण उवाच—

ादि नो दीयते चेयं भार्यामन्यां मम प्रियाम् । राज्यं महेश्वरे भक्तिं प्रयच्छ वरमुत्तमम् ॥ ८०
भविष्यत्येवमेवैतदित्युक्त्वा चाब्रवीन्मुनीन् । भोक्तव्यमिह युष्माभिर्ममास्मिन्दिवसत्रयम् ॥ ८१
ीन्दुवारे देवस्य महेशस्यैव तुष्टये । भोजनीयाः सदाकालमष्टौ विप्रा मुनीश्वर ॥ ८२
च्छया यत्र कुत्रापि व्रतमेतदुपक्रमेत् । वत्सरे परिपूर्णे तु महाराजतमीश्वरम् ॥ ८३
ुर्निष्कप्रमाणेन तदर्धेनैव कारयेत् । [*श्वेतवस्त्रयुगं सूक्ष्मं चामरे व्यजने तथा ॥ ८४
दुकोपानहं छत्रं सर्वं विप्रे नियोजयेत्] । स्वशक्त्या दक्षिणां दत्त्वा ब्राह्मणांश्च विसर्जयेत् ८५
ादुद्यापने कुर्यादादौ मध्ये तथा सुधीः । दिने दिने तथा पूजा सोमस्य परमात्मनः ॥ ८६
त्पुरुषस्य विद्महे महादेवस्य धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ इति पूजामन्त्रः । ८७
ण्डिले पूजयेद्देवं प्रतिमायामथापि वा । एकभक्तं स्वयं कुर्याद्ब्रह्मचर्यसमन्वितम् ॥ ८८
त्सोमव्रतं प्रोक्तं शिवतुष्टिप्रदं शुभम् । य एवं कुरुते भक्त्या नारी वा पुरुषोऽपि वा ॥ ८९
ैव शंकरस्यासौ नित्यमेवानुवर्तते । अथ सोमदिनं प्राप्तं मध्याह्नात्परतो भुजिः ॥ ९०
च सर्वे मुनयः कृतपौर्वाह्णिकक्रियाः । माध्याह्निकीं क्रियां कृत्वा भोक्तुमहर्थ सत्तमाः ॥ ९१
ुर्वचनमाकर्ण्य तथेत्युक्त्वा नमस्य च । अनुष्ठानाय ते सर्वे गता भागीरथीं नदीम् ॥ ९२
मे मध्यतो वृत्ते कृत्वा माध्याह्निकीं क्रियाम् । विश्वेशपूजां कृत्वा च षोडशैरुपचारकैः ॥ ९३
थ ते पार्वतीगेहं गत्वा देवीं प्रणम्य च । लोकमातुर्नियोगेन शालङ्कायनकात्मजः ॥ ९४

* धनुश्चिह्नान्तर्गतः पाठः ख. ङ. च. छ. ट. ड., पुस्तकस्थः । † "तत्पुरुषाय" इति चतुर्थ्यन्तः प्रसिद्धः पाठ-
स्थाऽपि सर्वपुस्तकेषु षष्ठ्यन्तः पाठो वर्तते । चतुर्थ्यन्तपाठस्तु युक्ततरः ।

१ ट. °ते चेदं दा° ।

पादप्रक्षालनमुखानुपचारानकल्पयत् । पञ्चगन्धकमादाय तान्मुनीनभ्यलेपयत् ॥
राज्यं च महदाप्नोति यो दद्यात्पञ्चगन्धकम् । पञ्चबाणसमो भूत्वा स्त्रीणां वल्लभतामियात्॥१
विष्णवे यो हि दद्यात्तु सोऽपि मारसतो(मो) भवेत् । कामी त्वकामी यः कुर्यात्कैलासे पञ्च वत्सरा
सर्वगन्धसमोपेतो भोगी चेष्टार्थसंयुतः । यथेष्टवर्तनो भूत्वा ततो जायेत भूमिपः ॥ १
कस्तूरी चन्दनं चन्द्रमगरुद्वितयं तथा । पञ्चगन्धकमाख्यातं सर्वकार्येषु शोभनम् ॥ १
विलिप्तपञ्चगन्धेषु ब्राह्मणेषु महात्मसु । आसीनेषु तदा प्रायाद्ब्राह्मणः स्थविरः कृशः ॥ १०
उन्मत्तवेषो दिग्वासा जराजर्जरितस्त्वरी । खल्वाटः श्वासकासी च बहुहिक्की क्षुधाऽन्वितः
लालाप्लुतः श्मश्रुकूर्चश्लेष्मा नम्रः स्खलत्पदः । द्व्यष्टवर्षा तदा नारी सर्वाभरणभूषिता ॥ १०
रूपलावण्यसंयुक्ता लोकोत्कृष्टस्वरूपिणी । पुरुषान्रूपसंयुक्तान्वीक्षन्ती च ततस्ततः ॥ १०
गायन्ती त्वथ नृत्यन्ती तं दृष्ट्वा हसती पतिम् । प्रबाधते वृद्धचव शीघ्रमेहि क्षुधा मम ॥ १०
आलम्ब्य त्वत्करं वृद्ध दुःखिता नित्यमस्म्यहम् । भूषणं वसनं घ्राणं स्रग्विलेपनमेव च ॥१०
हासो गीतिस्तथा पानं मण्डनं शोभनं गृहम् । सर्वर्तुसमृद्धिश्च कामस्यैवाभिवृद्धये ॥ १०
सर्वेषामेव कामानां रतिरेका प्रयोजनम् । सुखानि सर्वाण्येकत्र रतिरेकत्र च स्थिता ॥ १०
तुलया तुलितं सर्वं रतिः शतगुणाधिका । तन्मादृशी समासाद्य भवन्तं किं करिष्यति ॥ १०
इति चान्यानि वाक्यानि ब्रुवाणाऽऽगृह्य वै करे । तदुत्तरमुवाचेदं किं कुर्मो भाग्यमीदृशम् १०
म(न) मारय दुरुक्त्या त्वं मां विज्ञायाथ चेदृशम् । एतादृशो द्विजः प्रायात्पार्वतीमन्दिरं तदा
अविज्ञायैव गिरिजामिदं वचनमब्रवीत् ॥ ११

द्विज उवाच—

अन्नार्थिनमिह प्राप्तं विद्धि मामतिथिं मुने । भोजनावसरे प्राप्तं ब्राह्मणान्नं हि भोजय ॥ ११
तद्भार्या वचनं प्राह क मुनिर्योषिदत्र हि । अन्धस्य वचनं सर्वमेवमेतादृशं दृढम् ॥ ११

पार्वत्युवाच—

प्रक्षाल्य चरणावेतमासने उपवेशय । जाम्बूनदकृतेऽतीव भोजनात्तर्पय द्विजम् ॥ ११
सुरत्नचषकोपेतममृतं ब्रह्मवादिनीम् । अरुन्धतीमथाऽऽहूय पर्यवेषयदम्बिका ॥ ११
कला चारुन्धती चैव त्वनसूया पतिव्रता । परिवेषं पदार्थानां स्रग्गन्धाक्षतभूषणाः ॥ ११
अकुर्वन्नम्बिकावाक्यात्षड्रसानां पृथक्पृथक् । भुञ्जानेषु तु विप्रेषु दिग्वासा ब्राह्मणाकृतिः ११
क्षणेन बुभुजे सर्वं दातुं नो शेकुरङ्गनाः । अथ सा गिरिजा देवी स्वयं दातुं प्रचक्रमे ॥ ११
यथादत्तमशेषं च क्षणेनाश्नाति स द्विजः । भाण्डस्थितमशेषं च भोक्तुमैच्छत्प्रियासह ॥ ११
तथाऽम्बिका समादाय प्रादादक्षय्यमस्त्विति । अथ वामकरेणासौ भोक्तुमैच्छत्ततः सती॥११
तत्राप्यक्षय्यमेवास्तु तवान्नमिति चार्पयत् । करान्तरमथोत्पाद्य भोक्तुमैच्छद्द्विजोत्तमः ॥ १२
एवं करसहस्रं च कृत्वैच्छद्भोजनं द्विजः । दत्त्वा दत्त्वा पुनर्देवी संतुष्टा न च कोपना ॥ १२
न चित्तमन्यथा कर्तुं शक्यमस्या इति द्विजः । प्रक्षाल्य हस्तौ चरणौ हस्तार्पितसुगन्धवान् ॥
पार्वतीं वाक्यमाहेदं तोषितोऽहं वरं वृणु ॥ १२

१ झ. ञ. च देहमाप्नो° । २ ट. चार्म । ३ ख. ङ. च. छ. ट. ड °र्वस्तुस° । ४ ख. ङ. च. छ. ट. ड. पूर्वं ।
झ. ञ. °णामां हि । ६ क. °मं श्रुत्वा एव° ।

पार्वत्युवाच—
दातुं वरं शक्तो यदि त्वं ब्राह्मणोत्तम । वरेण मम किं कार्यं शंकरो मे यतः पतिः ॥ १२३
ऽऽह ब्राह्मणो देवीं शंकरः कीदृशस्त्विति । सदृशोऽसौ त्वया नो वा त्वद्योग्यो नान्यथा भवेत्
लुभर्त्वं मय्येवं रूपदाक्ष्यं शुभाङ्गता । नो चेदेतादृशी भार्या मदधीना कथं भवेत् ॥ १२५
पार्वत्युवाच—
ार्यावचनं श्रुत्वा तव वाक्यं तथा द्विज । अपलापस्त्वयं ब्रह्मञ्श्रुतं किं वा तथा वि(मि)षम्
ब्राह्मण उवाच—
मलं ते करिष्यामि ममाङ्कं त्वं समारुह । प्रचलेद्यदि ते चित्तं पातिव्रत्यं कुतस्तव ॥ १२७
पार्वत्युवाच—
म व्रतं द्विजश्रेष्ठ शंकराङ्कैकरोहणम् । अथ तच्चित्तमाज्ञाय भवान्याः परमेश्वरः ॥ १२८
ष्टवर्षवया भूत्वा सुस्निग्धकचबन्धनः । सुस्निग्धचारुनयनो गोक्षीरसमविग्रहः ॥ १२९
ोटिकंदर्पलावण्यः सर्वाभरणभूषितः । स्वपार्श्वस्थितनार्यंसे प्रसारितभुजद्वयम् ॥ १३०
ायन्मन्दं तया साकमुमया पटया(?) यथा । अथ तां पार्वतीं शंभुः करेणाऽऽकृष्य च स्मयन् ॥
विन्यस्य हस्तौ वनिताद्वयांसे गायन्समस्ताभरणः प्रसन्नदृक् ।
ननर्त चाऽऽनन्दसमृद्धगात्रो मुनीन्द्रगीतश्च सकालवेलम् ॥ १३२
तादृशं शिवं ध्यात्वा जन्मकोटिशतेष्वपि । न दुःखं जायते तस्य सदा हर्षश्च जायते ॥ १३३
थ स्तुतो मुनिवरैर्नारीं कृत्वा हरिं ततः । अथ सा पार्वती हृष्टा देवं प्राह पिनाकिनम् ॥ १३४
पार्वत्युवाच—
किमित्येतादृशं भावमास्थाय त्वमिहाऽऽगतः । नारीं कृत्वा तथा विष्णुं किं प्रकृत्या न चाऽऽगतौ ॥
शवः प्राह व्रते चात्र ह्यतिथेर्भोजनं शुभम् । जाने सिद्धिमथो येषां विषादो नाभिजायते ॥ १३६
ाते विषादे तु व्रतमसम्यगिति निश्चयः । सोमवाराः समायान्ति यावन्तोऽब्दशतानि तु ॥ १३७
वन्ति मत्पुरे देवि सर्वभोगसमन्वितः । सभार्यापुत्रबन्धुश्च वेदोक्तायुष्यजीवनः ॥ १३८
ाद्वाराणसीं गत्वा मृतो मुक्तिमवाप्स्यसि(ति) ॥ १३९
शंभुरुवाच—
देवे स्थिते तत्र मुनयस्त्रिः प्रदक्षिणम् । कृत्वा पञ्च नमस्कारान्पुनः कृत्वा प्रदक्षिणम् १४०
श्च दण्डवत्कृत्वा विसृष्टा निर्ययुस्ततः । अथ शोणः स्वाभिमतां भार्यामाप ह्यनिन्दिताम् १४१
यं च भारते वर्षे धर्मेणापालयद्द्विजः । मानुषानखिलान्भोगानवाप शिवभक्तिमान् ॥ १४२
यं देवार्चनपरो नित्यं ब्राह्मणपूजकः । नित्यदाता नित्ययाजी नित्यश्रोता पुराणकम् ॥
स गतवाँल्लोकं शंकरस्य विभोः शुभम् ॥ १४३
शंभुरुवाच—
कीर्तनमाहात्म्यं प्रसङ्गात्परिकीर्तितम् । शृण्वतां सर्वपापघ्नं भक्तानां च तथा नृप ॥ १४४
कल्याणदं नित्यं सुभार्याराज्यदं शिवम् । शिवभक्तिप्रदं गोप्यं यस्य कस्यापि नेरयेत् ॥ १४५

इति श्रीमहापुराणे पाद्मे पातालखण्डे शिवराघवसंवादे नाममाहात्म्यकथनं नामाष्टोत्तरशततमोऽध्यायः ॥ १०८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१८४३९

१ झ. ञ. ब्रह्मंस्त्वयं किं । २ छ. ड. श्रुतम् ।

अथ नवाधिकशततमोऽध्यायः ।

---

श्रीराम उवाच—

खे दृश्यन्ते विमानस्था नानारूपधराः शुभाः । सर्वकामफलोपेताः सुभार्याः शतयोषितः ॥
सहस्रनरनारीभिः पूज्यमानाः पदे पदे । गायन्ति विंशतिर्योषा रूपलावण्यकोमलाः ॥
करङ्कवाहिनी चैका चामरासक्तबाहवः । तालवृन्तद्वयं नार्यो वीजयन्ति प्रगृह्य वै ॥
स चक्रे चाङ्कमध्येऽस्या उपधानं तथाऽपरः । एकस्याः करयोर्हस्तं स्तावकानेकसंयुतः ॥
नानाविधपरीहासकृतोत्फुल्लमुखाम्बुजः । एकैकत्र विमाने तु दृश्यते चन्द्रदीधितिः ॥
[1]स्त्रीशतेषु विमानेषु दृश्यते ईश्वरः शुभः । एते किं पुण्यकर्तारो विष्णुमायाऽथवा मुने ॥

शंभुरुवाच—

एते हि ब्राह्मणाः पुण्या गृहस्थाश्रमवासिनः । एषामेव च[2] स ग्रामो दत्तो दशरथेन ते ॥
तेषां तु ममचित्तानां कदाचिदभवन्मतिः । यथेह सुखिनः सर्वे वयं चान्योपजीविनः ॥
अस्मानेवानु जीवन्ति शतशो[3] मनुजा इह । येन पुण्येन च वयं सर्वे कामानुमोदिनः ॥
सुस्त्रीकृतोपचाराश्च सर्वे राज्यसुखान्विताः । जरामरणहीनाश्च युवानः सर्वदैव हि ॥ १
विचार्यैवं द्विजाः सर्वे वसिष्ठस्याऽऽश्रमं ययुः । आगतानथ संपूज्य वसिष्ठो वाक्यमुक्तवान् ॥
किमर्थमागता यूयं शीघ्रं ब्रूत द्विजोत्तमाः ॥ १

द्विजा ऊचुः—

वयमिच्छामहे सर्वे सर्वसंपत्समन्विते । विमाने कामगे रोढुं तत्संपादय नो गुरो ॥ १
तत्तेषां चिन्तितं श्रुत्वा वसिष्ठो वाक्यमब्रवीत् । पुराणं सर्वदा विप्राः श्रोतव्यं पापनाशनम् ॥ १
धर्मश्चार्थश्च कामश्च मोक्षस्तत्रैव दृश्यते । तथेत्युक्त्वाऽथ मुनयः पुराणकुशलं मुनिम् ॥ १
जग्मुरङ्गिरसं श्रेष्ठं सर्वशास्त्रविशारदम् । सर्वागमपुराणज्ञं सदासत्कर्मचारिणम् ॥ १
इदमूचुर्नमस्कृत्य वयं सफलजीविनः । कृतकृत्या वयं ब्रह्मन्साक्षाद्दृष्टोऽसि यन्मुने ॥ १

अङ्गिरा उवाच—

यत्कार्यमागता यूयं तत्कार्यं करवाण्यहम् । पुराणं श्रोतुकामास्तु यूयमत्र समागताः ॥ १
कीर्तयिष्ये विधानं वः समस्ताघविनाशनम् । सर्वज्ञानप्रदं[4] देवं तत्त्वविज्ञानसंभवम् ॥ १
शिवभक्तिप्रदं हृद्यं विष्णुभक्तिप्रदं शुभम् । विचित्रस्य गतिप्राप्तिज्ञानदं रमणीप्रदम् ॥ १
नानाविधशुभज्ञानरतितत्त्वप्रकाशकम् । भुक्तिमुक्तिप्रधानं च विधिदर्शनदीपकम् ॥ २
विचित्रभक्तिकथनं भक्तिसाहस्रकीर्तनम्[5] । व्रतप्रतिष्ठादानादिभस्मपूजाविधिप्रदम् ॥ २
पुराणं पाद्ममुदितं ब्रह्मपद्मोपनिर्वृतम्[6] । महेश्वरेण कथितं प्रमथाकृतिवर्णनम् ॥ २
एतदन्यत्र कथितं पुराणे पाद्म एव तु । दिलीपेन पुरा पृष्टो वसिष्ठः प्रोक्तवानिदम् ॥ २
तच्छृणुध्वं मुनिवरा ज्ञानं सर्वं भविष्यति । अथ तद्वचनाद्विप्राः पुराणश्रवणे रतः[7] ॥ २
कथं श्रोतव्यमधुना किं कृत्वेत्यब्रव(ब्रवी)न्मुनिम् । सोऽपि सर्वं समाचष्टे शृणु धर्मं सनातनम्
नमस्कृत्य पुराणज्ञं दद्याच्चार्घासनं ततः । निषीद तत्र चेत्युक्त्वा गन्धपुष्पैः समर्चयेत् ॥ २

---

१ झ. त्रिशतेषु । २ अ. च संप्रा° । ३ छ. ड. °शोऽथ सहस्रशः । ये° । ४ ख. ङ. ड. °प्रदानं । ५ अ. भक्तसासक्ती° । ६ क. ख. ङ. च. छ. ट. ड. °निर्मित° । ७ अ. रताः ।

मयोग्यं च ताम्बूलमधिकं वा समर्चयेत् । ब्रूहि पुण्यकथां ब्रह्मन्पौराणिकीमितीरयेत् ॥ २७
द्वासनमारुह्य नोच्चासनमथापि वा । नीचासनो वै शृणुयाद्धर्मकामार्थसिद्धये ॥ २८
त्युक्त्वा पुराणज्ञ इमं मन्त्रमुदीरयेत् । नमो हरिं हरमथो गणेशं भारतीमतः ॥ २९
वं नमस्कृत्वा पुराणं वक्तुमर्हति । अर्धयामं प्रतिदिनं यदि वाऽपीच्छया भवेत् ॥ ३०
दिनसमाप्तिं च श्रुत्वा कृत्यं समाचरेत् । श्रोतुश्च तूष्णीं मननं तूष्णीं श्रवणमेव वा ॥ ३१
यथा भारती क्रुध्येत्तत्क्रोधान्मूकता भवेत् । तस्मात्पुराणश्रोता(त्रा) च ताम्बूलादिसमर्पणम्
श्च जीविका कार्या स्वसामर्थ्यानुसारतः । पुराणमक्रमे देयं सचेलोद्गमनीयकम् ॥ ३३
म्बरमथो वाऽपि वस्त्रद्वितयमर्पयेत् । आसनं तु महच्चित्रं रम्यमूर्जस्वलं मृदु ॥ ३४
र्णं वा तथा दद्याद्गोभूगेहादिकं तथा । एतत्समस्तं विप्रेन्द्रा दक्षिणामूर्तिना पुरा ॥ ३५
करेण मुनीनां हि भाषितं च दिवौकसाम् । अथ ते मुनयः सर्वे तं प्रणम्याऽऽसनास्थितम् ३६
पृथक्च ताम्बूलं दत्त्वा शुश्रूषवः स्थिताः । तेनापि कथितं सर्वं पुराणं सर्वसंपदम् ॥ ३७
न्ताध्यायपर्यन्तं श्रुतवन्तो द्विजोत्तमाः ॥ ३८

दिलीप उवाच—

मगेन विमानेन सर्वसंपत्समृद्धिना । सर्वतःसुखयुक्तेन पुण्यस्थानमुपस्थितम् ॥ ३९

वसिष्ठ उवाच—

ालं पृष्टं त्वया राजंश्चितोऽप्यतिशयान्तरैः । क्रीडमाना भविष्यन्ति येन तत्पुण्यमुच्यते ॥ ४०
धाधवलितं कृत्वा शिववेश्म समन्ततः । स्त्रियो रूपविलासाढ्याः सर्वालंकारभूषिताः ॥ ४१
ानासुगीतकुशला नानानृत्यविशारदाः । चतस्रोऽष्टौ षडथवा मर्दलध्वनिकाः स्त्रियः ॥ ४२
ासिन्यौ द्वे आवजिक्यौ कोणिकाधमने उभे । लासिक्यस्तु चतस्रः स्युः संतुष्टैकाऽथ गायिका
का द्वे वा सुगीतज्ञे मुखरे हि प्रकीर्तिते । कोणवाद्यकृते द्वे तु तूष्णींभूताः षडष्ट वा ॥ ४४
र्वा रूपविलासिन्यः सर्वाश्चापतितस्तनाः । रतितन्त्राब्धिकुशलास्तत एव विशङ्किताः ॥ ४५
सूक्ष्मवस्त्रवेषाश्च विद्युच्चञ्चलदृष्टयः । एतादृशीभिर्योषाभिर्येन नृत्यं हि कारितम् ॥ ४६
कस्मिन्दिवसे राजन्वत्सरात्स विमानगः । शतस्त्रीवीक्षितमुखो युवा बहुभिरर्चितः ॥ ४७
नन्द एष संपूर्णः क्रोधेर्ष्यादिविवर्जितः । पञ्चगन्धविलिप्ताङ्गः सचन्द्राह्रिदलाननः ॥ ४८
र्यो यमस्तु योषाश्च सर्वास्तादृशभान्विताः । सद्योविकसितामोदिपारिजातकृतस्रजः ॥ ४९
ो विकसितारोहिरक्तसंध्याकृतस्रजः । धम्मिल्ले वक्षसि तथा बिभ्रत्यः सुस्मिताधराः ॥ ५०
त्येतादृशीभिस्तु नृत्यगीतानुमोदितः । एवं विमानगो भूत्वा उषित्वा कालमक्षयम् ॥ ५१
ाज्जायेत नृपतिरेवं कृत्वा पुनस्तथा । राज्यं स्वर्गफलं भुक्त्वा शिवभक्तो भविष्यति ॥ ५२

शंभुरुवाच—

लीपाय वसिष्ठोक्तं मुनीनामङ्गिरोऽब्रवीत्* । ते तथा कृतवन्तश्च तौर्यत्रिकमुमापते ॥ ५३
त्वा पुराणं पद्मं च समग्रं सुखिनोऽभवन् । त एते ब्राह्मणा राम विमानवरमास्थिताः ॥ ५४

---

* आर्षोऽयं संधिः ।

---

१ अ. °त् । एवं दिनसमाप्तौ° । २ क. अ. °सादरः । पु° । ३ ख ङ. सूक्ष्मं नर । ४ अ. °जन्नतो यान्ति शतैरपि ।

दृश्यन्ते खे च सुखिनः सदा मुदितमानसाः । एतत्ते सर्वमाख्यातं पुराणेषु विनिश्चितम् ॥
इतः परं च किं भूयः श्रोतुमिच्छसि राघव ॥ ९

इति श्रीमहापुराणे पाद्मे पातालखण्डे नवाधिकशततमोऽध्यायः ॥ १०९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१८४९४

अथ दशाधिकशततमोऽध्यायः ।

राम उवाच—

क एष दृश्यते व्योम्नि सर्वाभरणभूषितः । विमानस्थो महादीप्तमध्याह्नार्क इवापरः ॥
दुष्प्रेक्ष्यः सर्वमर्त्यानां तस्याङ्के चारुहासिनी । अपरा श्रीरिव ब्रह्मंस्तथा पश्च सुयोषितः ॥
गायन्ति मधुरां गीतिं सभ्रूभङ्गनिरीक्षणैः । मन्दस्मितैः करतलशब्दास्फोटिकया तथा ॥
[1]क्वचिद्दलकृतैर्गीतैरन्योन्यकरताडनैः । अन्योन्यमुखमालोक्य प्रलोभैर्गीतपूर्वकैः ॥
क्रीडन्नास्ते महायोगी पद्मकिञ्जल्कसंनिभः । एवं चरितपुण्येन केन वा तद्वदस्व मे ॥

शंभुरुवाच—

एष विप्रः पुरा राम सर्वसंपत्समन्वितः । नानाविधसुखोपेतो भार्यापोषणतत्परः ॥
अपुत्रो दानहीनश्च देवतार्चनवर्जितः । पञ्चयज्ञविहीनश्च स्वाध्यायपरिवर्जितः ॥
प्रातर्मध्याह्नसायाह्नभोजनप्रवणोऽशुचिः । कदाचिदगमद्गेहं गौतमस्य महात्मनः ॥
त्र्यम्बकस्य गिरौ पुण्ये नानामुनिगणाश्रिते । तत्रातिशोभितगृहं स्फटिकस्तम्भकल्पितम् ॥
अगुरुद्रवकस्तूरीचन्द्रकुङ्कुमचर्चिता । भित्तिर्यस्य च संतानकुसुमामोदसौष्ठवम् ॥ १
कस्तूरिकापुष्परससमुत्सेचितभूतलम् । सूक्ष्मसुश्वेतविविधवितानोपरिशोभितम् ॥ १
[*अङ्गणं शोभितमहाकदलीपूगशोभितम् ] । समीपसरसीजातमञ्जुकुञ्जन्मधुव्रतम् ॥ १
पटीरतरुसंभूतगन्धपूरितदिङ्मुखम् । शिक्षागतकृताह्लादगीतपूरितदिङ्मुखम् ॥ १
निदाघजनितातापनाशनाय विनिर्मितम् । कदलीदलसंछादि पावकाकल्पितच्छदम् ॥ १
पटीरतरुसुस्निग्धसान्द्रद्वारकपाटकम् । सौगन्धिकमहामोदिकल्पितान्तरभित्तिकम् ॥ १
ईशानभोगसुभगरतिकल्पितवेदिकम् । हाटकाकल्पितपदं विचित्रवनिकायुतम् ॥ १
सुस्निग्धनिबिडच्छायवटमूलोपकल्पितम् । प्रसूनकदलीखण्डसरोभिप्रान्तशोभितम् ॥ १
महावटाग्रसंलग्नतुषारितपयोधरम् । नाकोपवनसंपन्नविचित्रारामशोभितम् ॥ १
वापीकूपतडागाढ्यमनेकगृहशोभितम् । मन्दं मन्दं ववौ वायुर्यत्र गेहे सुखप्रदः ॥ १
वादिन्यश्चारुसर्वाङ्ग्यो वाद्यानि स्मरसंपदः । वीणावेणुत्रिवेणुं च वादयन्ति वराङ्गनाः ॥ २
तौर्यत्रिककृतो नार्यश्चतुर्दिक्षु तथोर्ध्वतः । सुवर्णादिकपात्रेषु वटका भस्मनः शुभाः ॥ २
वासिताः सर्वगन्धैश्च सुधूपैरपि धूपिताः । कुशग्रथितसंघाश्च त्वक्षमालाश्च कोटिशः ॥ २
कृष्णाजिनसहस्राणि बहिष्प्रान्ते स्थितानि च । एतादृशे गृहवरे देववन्द्यो मुनीश्वरः ॥ २
कर्पूरादींश्च संस्थाप्य चतुर्दिक्षु मुनीश्वरः । पटीरपीठे कर्पूरसिंहासनमकल्पयत् ॥ २

* धनुश्चिह्नान्तर्गतः पाठः, छ. ट. ड. पुस्तकस्थः ।

१ ज. °चिद्रत्नकृतैर्दीपैर° ।

श्वेतं च सुस्निग्धमावृतं घनसारकैः । सुगन्धिवासितजलैः स्नाप्य क्षीरेण शंकरम् ॥ २५
श्च वैदिकैर्मन्त्रैः स्नापयित्वा सदाशिवम् । दारुचन्द्रोपपीठे तु वस्त्रपीठं निधाय च ॥ २६
कामग्रतः स्थाप्य स्थापयित्वा दलेष्वमून् । एकस्मिन्नक्षताः पात्रे ह्यन्यस्मिन्सलिलाक्षताः २७
न्धकमेकस्मिन्नेकस्मिन्नष्टगन्धकम् । काश्मीरं मृगनाभिं तु कर्पूरं चन्दनं तथा ॥ २८
ष्वन्येषु विन्यस्य पूजास्थाने प्रकल्प्य च । नानावरणमार्गेण पूजा तत्र विधीयते ॥ २९
मध्ये स्थितो देवः पञ्चवक्त्रः सदाशिवः । तस्य प्रावरणं लिङ्गशक्तिस्तस्य विधीयते ॥ ३०
रावरणं विष्णुर्विष्णोरावरणं विधिः । ब्रह्मप्रावरणं चन्द्रस्तस्य सूर्यस्ततः श्रुतिः ॥ ३१
वतास्तु तद्भक्तिस्तासामावरणं दिशः । दिशामावरणं शंभुस्तस्य चाऽऽवरणं गुणाः ॥ ३२
प्रावरणं ह्येतच्छिवलिङ्गार्चनं शुभम् । केषांचिन्मतमेतत्स्यादथ प्रावरणान्तरम् ॥ ३३
वरणमाख्यातं तदुमावरणं स्मृतम् । विष्णुरावरणं तस्या विष्णोश्चाऽऽवरणं विधिः ॥ ३४
प्रावरणं चन्द्रस्तस्य भानुरथाऽऽवृतिः । भानोरावरणं चेश इति षोढाऽऽवृतिः स्मृता ॥ ३५
धिं विना समाख्यातं पञ्चावरणमुत्तमम् । शशाङ्कविष्णुशक्तीनामेतदावरणत्रयम् ॥ ३६
म्बिकावरणं प्रोक्तमेकावरणमुत्तमम् । अथवा लोकपालाः स्युरावृतिः सोमपूजने ॥ ३७
नावरणमथवा पूजनं शस्यते शिवे । पत्रिकाष्टदलेष्वेव स्थितद्रव्यैर्यजेच्छिवम् ॥ ३८
त्रिकालक्षणं वक्ष्ये सर्वकर्मोपयोगितम् । स्वर्णेन राजतेनाथ ताम्रेणाथ प्रकल्पितम् ॥ ३९
क्ताशुक्तिनिभं कुर्यात्पत्रिकाष्टदलं शुभम् । पद्मपत्रसमानेन(?) पत्राकारं प्रकल्पयेत् ॥ ४०
लमात्रं ततः शस्तं निर्वृतं विस्तृतं पदम् । अस्थूलमध्यमुपरि पद्माकृतिदलाष्टकम् ॥ ४१
थवा शक्तिमार्गेण पञ्चपत्रं प्रकल्पयेत् । त्रिपत्रमथवा कुर्याच्छक्तिभावेन तेन च ॥ ४२
था स्याच्छोभनं पत्रं तथा कुर्याद्विचक्षणः । शक्त्याऽन्तरितरुद्राक्षैः कल्पिताष्टशतैः शुभा ॥४३
लोपवीतं त्रिंशत्या त्वष्टकेन प्रकल्पिता(?) । प्रगण्डयोरथैकैकं बद्ध्वा तु द्वे प्रकोष्ठयोः ॥ ४४
शिरस्येका धृ(धृ)ता तेन कण्ठे च परमर्षिणा । रुद्राक्षैः स्फटिकै रत्नैः कल्पिता ह्यक्षमालिका ४५
व्याघ्रचर्मासनं कृत्वा पद्मासनगतो मुनिः । आवाहं चाऽऽसनं चार्घ्यं पाद्यं चाऽऽचमनीयकम् ॥
निर्वर्त्य गङ्गासलिलैः स्नापयामास शंकरम् । अष्टगन्धकसंयुक्तैर्युक्तैर्बकुलपाटलैः ॥ ४७
वर्णभाण्डस्थितैर्वस्त्रशोधितैर्वासितैर्दृढम् । द्वारे ताम्रकटाहश्च प्रबन्धद्रोणिना शुभम् ॥ ४८
शृङ्गेण विषाणेन गवयस्य तथा क्वचित् । दक्षिणावर्तशङ्खेन रत्नपात्रैरथापि वा ॥ ४९
र्णैर्वा राजतैर्वाऽपि ताम्रैः कांस्यैरथापि वा । स्वर्गैश्च सूक्ष्मकलशैः स्नापयामास चेच्छया॥५०
थवा मृन्मयैः कुर्यात्पद्मपत्रैरथापि वा । पलाशैश्चूतजम्ब्वाद्यैः पात्रैः संस्नापयेद्विभुम् ॥ ५१
नानामथ सर्वेषां धारास्नानं विशिष्यते । नमस्तेत्यादिमन्त्रेण शतरुद्रीयसंज्ञिना ॥ ५२
चेत्याद्यनुवाकेन शान्तिरूपेण चेश्वरम् । आवृत्य च यथाशक्ति पश्चाद्गन्धादि विन्यसेत् ॥५३
श्च शोभनैः पुष्पैः पत्रैर्बिल्वैः समर्चयेत् । तुलसीमारुवदलैः कह्लारैश्च महोत्पलैः ॥ ५४
लोत्पलैरुत्पलैश्च शेषैश्च करवीरकैः । कर्णिकारैः सिताम्भोजैरपराजितया तथा ॥ ५५
लाक्षतैरक्षतैश्च श्रीपत्रैस्तिलमिश्रकैः । एवं महेशमीशानं पूजयामास गौतमः ॥ ५६
पूरागरुकस्तूरीसर्जागरुकचन्दनैः । अन्यैश्च धूपयामास षोडशाथ प्रदीपिकाः ॥ ५७

१ ख. °रगैः । सु° । २ अ. च । पत्रि° । ३ अ. °त्वा जले° । ४ ख. गणाः । ५ अ. °ल्पिताम् । ६ अ. पात्रं । ७ क. शक्त्वा अष्ट° ।

कर्पूरवर्तिसंयुक्ता दीपपात्रोपरि स्थिताः । निवेदितं(ता) महेशाय ह्यथ नैवेद्यमुत्तमम् ॥ ५
सुपक्वशालिपिष्टान्नं भक्ष्यं लेह्यं च चोषकम् । मधुरादिसमोपेतं पञ्चभक्ष्यसमन्वितम् ॥ ५
अनेकपक्वशाकाढ्यमनेकपक्वमिश्रितम् । पानं विंशतिसंयुक्तं द्राक्षारम्भाफलान्वितम् ॥ ६
सहकारफलैश्चान्यैर्नागरङ्गफलाक्षतैः । शर्करागुडसंयुक्तैराज्यपात्रसमन्वितम् ॥ ६
सूपाष्टकादिसंयुक्तं युक्तं मूलफलादिना । यथासंभवसंयुक्तैरन्यैरप्युपकल्पितम् ॥ ६
अग्रपुष्पसमोपेतं नैवेद्यं प्रददौ मुनिः । सौवर्णपात्रिकान्यस्तनीराजनसहस्रकम् ॥ ६
सोपहाराय देवाय दत्त्वा चैव नमस्य च । पूगखण्डानथो घृष्टान्पत्राणि क्षालितानि च ॥
अपृष्ठाग्राणि सुश्वेतच्छदप्रावृत्तिकानि च । घनसारकचूर्णं च न्यस्तपत्रत्रयं शुभम् ॥
सौवर्णपात्रविन्यस्तमिदं ताम्बूलमीश्वरे । अथ प्रदक्षिणं कृत्वा नमस्कारानन्तरम् ॥
अष्ट योषास्ततः प्राप्तास्तन्त्रीवेण्वादिधारिताः । विचित्रवाद्यवादिन्यः संप्राप्ता मुनिसंनिधिम् ॥
क्षुद्रतालयुगं गृह्य स्वयं गातुं प्रचक्रमे । गौतमे गातुमुद्युक्ते तानं कुर्युरथाङ्गनाः ॥ ६
मन्दं मन्दं च वाद्यानि वादयन्ति तथाऽपराः । मधुरं गायति मुनौ स्वरा मूर्तिभृतस्तथा ॥ ६
प्रनृत्यन्तं महेशाग्रे तदद्भुतमिवाभवत् । एतस्मिन्नन्तरे प्राप्तो भगवान्नारदो मुनिः ॥ ७
तमागतं गौतमोऽपि संपूज्य प्रणिपत्य च । आह चैनं कृतार्थोऽस्मि न च कश्चिन्मया समः ॥
तत्राऽऽगमनकृत्यं किं कुत आगमनं तथा ॥ ७

नारद उवाच—

पातालादागतोऽस्मीह भुक्त्वा वै बाणमन्दिरे । आयास्यन्ति महात्मानो बाणशुक्रादयो गृहम्
अथ क्षणादभ्यगमद्बाणः परपुरंजयः । विंशत्यक्षौहिणीयुक्तो गजमारुह्य सोऽसुरः ॥ ७
अपरं हि गजं शुक्रः प्रह्लादो रथमुत्तमम् । वृषपर्वा रथवरं बलिस्तुरगमुत्तमम् ॥ ७
आगतानथ तान्सर्वानाज्ञाय स तु गौतमः । सशिष्यो निर्जगामार्थं ह्यादायार्घ्यादिकं तथा ॥ ७
गौतमं चापि ते वीक्ष्य ह्यवरुह्य गजादिकात् । नमश्चक्रुरथो दैत्यास्तं नमस्कृत्य भार्गवम् ॥ ७
आलिङ्ग्य राक्षसान्सर्वान्पूजयित्वा यथाविधि । सेनायाः संनिवेशं च चकार मुनिपुङ्गवः ॥ ७
पादौ प्रक्षाल्य शुक्रस्य तोयं मूर्ध्नि धृतं यथा । विचित्रफलसंयुक्तं दत्तवानर्हणं मुनिः ॥ ७
वापीतडागसरसि स्नानपूर्वकृतक्रियाः । संगमे वर्तमाने तु गौतमस्याऽऽश्रमे शुभे ॥ ७
तद्गेहं तु प्रविश्याथ राक्षसाः सपुरोहिताः । देवपूजाप्रयत्नं च चक्रुः सर्वे द्विजालये ॥ ८
सद्यः प्रकल्पितायां च वेद्यां शुक्रोऽयजच्छिवम् । तस्यैव वामभागे तु प्रह्लादोऽयजदच्युतम् ८
सोमं च बलिरप्येवमन्ये चासुरपुङ्गवाः । अथ बाणोऽयजद्देवमेकमेव त्रियम्बकम् ॥ ८
शुक्रोऽपि भगवन्तं तमुमानाथमपूजयत् । गौतमोऽप्यथ मध्याह्ने पूजयामास शंकरम् ॥ ८
सर्वे शुक्लाम्बरधरा भस्मोद्धूलितविग्रहाः । सितेन भस्मना कृत्वा सर्वस्थाने त्रिपुण्ड्रकम् ॥ ८
नत्वा तु भार्गवं सर्वे भूतशुद्धिं प्रचक्रमुः । हृत्पद्ममध्ये सुषिरं तत्रैव भूतपञ्चकम् ॥ ८
तेषां मध्ये महाकाशमाकाशे निर्मलासनम् । तन्मध्ये च महेशानं ध्यायेद्दीप्तिमयं शुभम् ॥ ८६
अज्ञानसंयुतं भूतं शमलं सर्वसंगतम् । तद्देहमाकाशदीपे प्रदहेज्ज्ञानवह्निना ॥ ८७
आकाशस्याऽऽवृतिं चाहं दग्ध्वाऽऽकाशमथो दहेत् । दग्ध्वाऽऽकाशमथो वायुमग्निभूतं तथा दहेत् ॥

१ क. °थ महाव्रतधरो मुनिः । गौ° । २ ख. च. छ. ट. ड. °लानलम् । ३ ख. ङ. च. छ. ट. ब. °लं कर्मसं° ।

भूते च ततो दग्ध्वा पृथिवीभूतमेव च । तदाश्रितान्गुणान्दग्ध्वा ततो देहं प्रदाहयेत् ॥ ८९
दहित्वा भूतादिं देहे तज्ज्ञानवह्निना । शिखामध्यस्थितं विष्णुमानन्दरसनिर्भरम् ॥ ९०
पद्मचन्द्रकिरणसंकाशकिरणं शिवम् । शिवाङ्गोत्पन्नकिरणैरमृतद्रवसंयुतैः ॥ ९१
ीतला ततो ज्वाला प्रशान्ता चन्द्ररश्मिवत् । प्रसारितसुधा रुग्भिः सान्द्रीभूतश्च संप्लवः
ण प्लावितं भूतग्रामं संचिन्तयेत्परम् ॥ ९२
इत्थं कृत्वा भूतशुद्धिं क्रियार्हो मर्त्यः शुद्धो जायते एव शुद्धः ॥
पूजां कर्तुं जाप्यकर्मापि पश्चाद्देवे ध्यानं ब्रह्महत्यादिहानिः ॥ ९३
एवं ध्यात्वा चन्द्रदीप्तिप्रकाशं ध्यानेनाऽऽरोप्याऽऽशु लिङ्गे शिवस्य ।
सदाशिवं दीपमध्ये विचिन्त्य पञ्चाक्षरेणार्चनमव्ययं तु ॥ ९४
आवाहनादीनुपचारांस्तथाऽपि कृत्वा स्नानं पूर्ववच्छंकरस्य ।
उदुम्बरं राजतं स्वर्णपीठं वस्त्रादिच्छन्नं सर्वमेवेह पीठम् ॥ ९५
अन्ते कृत्वा बुद्बुदानां च वृष्टिं पीठे पीठे नागमेकं पुरस्तात् ।
कुर्यात्पीठे चोर्ध्वके नागयुग्मं देवाभ्याशे दक्षिणे वामतश्च ॥ ९६
जपापुष्पं नागमध्ये निधाय मध्येवस्त्रं द्वादशप्रातिगुण्ये ।
सुश्वेतेन तस्य मध्ये महेशं लिङ्गाकारं पीठयुक्तं प्रपूज्यम् ॥ ९७
एवं कृत्वा बाणमुख्या दितीशा दत्त्वा दत्त्वा पञ्चगन्धाष्टगन्धम् ।
पुष्पैः पत्रैः श्रीतिलैरक्षतैश्च तिलोन्मिश्रैः केवलैश्च प्रपूज्य ॥ ९८
धूपं दत्त्वा विधिवत्संप्रयुक्तं दीपं दत्त्वा चोक्तमेवोपहारम् ।
पूजाशेषं ते समाप्याथ सर्वे गीतं नृत्यं तत्र तत्रापि चक्रुः ॥
अथास्मिन्नन्तरे गौतमस्य प्राप्तः शिष्यः शंकरात्मेति नाम्ना ॥ ९९
उन्मत्तवेषो दिग्वासा अनेकां वृत्तिमाश्रितः । क्वचिद्द्विजातिप्रवरः क्वचिच्चण्डालसंनिभः ॥ १००
क्वचिच्छूद्रसमो योगी तापसः क्वचिदप्युत । गर्जत्युत्पतते चैव नृत्यति स्तौति गायति ॥ १०१
ोदिति शृणुते व्यक्तं पतत्युत्तिष्ठति क्वचित् । शिवज्ञानैकसंपन्नः परमानन्दनिर्भरः ॥ १०२
प्राप्तो भोज्यवेलायां गौतमस्यान्तिकं ययौ । बुभुजे गुरुणा सार्कं क्वचिदुच्छिष्टमेव च ॥ १०३
चिल्लेहति तत्पात्रं तूष्णीमेवाभ्यगात्क्वचित् । हस्तं गृहीत्वैव गुरोः स्वयमेवाभुनक्क्वचित् ॥ १०४
चिद्गृहान्तरे मूत्रं क्वचित्कर्दमलेपनम् । सर्वदा तं गुरुर्दृष्ट्वा करमालम्ब्य मन्दिरम् ॥ १०५
विश्य स्वीयपीठे तमुपवेश्याभ्यभोजयत् । स्वयं तदस्य पात्रेण बुभुजे गौतमो मुनिः ॥ १०६
स्य चित्तं परिज्ञातुं कदाचिदथ सुन्दरी । अहल्या शिष्यमाहूय भुङ्क्ष्वेत्युक्त्वाऽथ सा शुभा ॥
वर्णे भाजने चान्नं निधाय चैषकान्तरे । पानादिकमथो दत्त्वा एकस्मिन्पावकं पुनः ॥ १०८
धायाङ्गारनिचयं कण्टकानां चयं परे । निधाय भुङ्क्ष्व भुङ्क्ष्वेति स चापि बुभुजे मुनिः १०९
था पपौ हि पानीयं तथा वह्निमपि द्विजः । कण्टकान्नं तु तद्भुक्त्वा यथापूर्वमतिष्ठत ॥ ११०
रा हि मुनिकन्याभिराहूतो भोजनाय च । दिने दिने तत्प्रदत्तं लोष्टमम्बु च गोमयम् ॥ १११
र्दमं काष्ठदण्डं च भुक्त्वा प्रीत्याऽथ हर्षितः । एतादृशो मुनिरसौ चण्डालसदृशाकृतिः ११२
जीर्णोपानहौ हस्ते गृहीत्वा तु तथा करे । अन्त्यजोचितभाषाभिर्हृषपर्वाणमभ्यगात् ॥ ११३

१ ट. °दिं देहान्तर्ज्ञानव° । २ ख. च कथान्त° । झ. अ. च कथान्त° ।

वृषपर्वेशयोर्मध्ये दिग्वासाः समतिष्ठत । वृषपर्वा तमज्ञात्वा पीडयित्वा शिरोऽच्छिनत् ॥ १
हते तस्मिन्द्विजश्रेष्ठे जगदेतच्चराचरम् । अतीव कलुषमभवत्त्रस्ता मुनयस्तथा ॥ १
गौतमस्य महाशोकः संजातः सुमहात्मनः । निर्ययौ चक्षुषो वारि शोकं संदर्शयन्निव ॥ १
गौतमः सर्वदैत्यानां संनिधौ वाक्यमुक्तवान् । किमनेन कृतं पापं येन च्छिन्नमिदं शिरः ॥ १
मम प्राणाधिकस्येह सर्वदा शिवयोगिनः । ममापि मरणं सत्यं शिष्यच्छया यतो गुरुः ॥ १
शैवानां धर्मयुक्तानां सर्वदा शिववर्तिनाम् । मरणं यत्र दृष्टं स्यात्तत्र नो मरणं ध्रुवम् ॥ १

शुक्र उवाच—

एनं संजीवयिष्यामि मम गोत्रं शिवप्रियम् । किमर्थं म्रियते ब्रह्मन्पश्य मे तपसो बलम् ॥ १
इति वादिनि विप्रेन्द्रे गौतमोऽपि ममार ह । तस्मिन्मृतेऽथ शुक्रोऽपि प्राणांस्तत्याज योगतः १
तस्यापि हतमाज्ञाय प्रह्लादाद्या दितीश्वराः । सर्वे मृताः क्षणेनैव तदद्भुतमिवाभवत् ॥ १
मृतमासीदथ बलं तस्य बाणस्य धीमतः । अहल्या शोकसंतप्ता रुरोदोच्चैः पुनः पुनः ॥ १
गौतमेन महेशस्य पूजया पूजितो विभुः । वीरभद्रो महायोगी सर्वं दृष्ट्वा चुकोप ह ॥ १
अहो कष्टमहो कष्टं माहेशा बहवो मृताः । शिवं विज्ञापयिष्यामि तेनोक्तं करवाण्यहम् ॥ १
इति निश्चित्य गतवान्मन्दराचलमव्ययम् । नमस्कृत्वा विरूपाक्षमिदं सर्वमथोक्तवान् ॥ १
ब्रह्मा हरिः स्थितौ तत्र दृष्ट्वा प्राह शिवो वचः । मद्भक्तैः साहसं कर्म कृतं दृष्ट्वा वरप्रदः १
गत्वा पश्यामहे विष्णो युवामप्यागमिष्यथ । अथेशो वृषमारुह्य वायुना धूतचामरः ॥ १
नन्दिकेन सुवेषेण धृते छत्रेऽतिशोभने । सुश्वेते हेमदण्डे च नान्ययोग्ये धृते विभोः ॥ १
महेशानुमतिं लब्ध्वा हरिर्नागान्तके स्थितः । आरक्तनीलच्छत्राभ्यां शुशुभे लक्ष्मकौस्तुभः १
शिवानुमत्या ब्रह्माऽपि हंसारूढोऽभवत्तदा । इन्द्रगोपप्रभाकारच्छत्राभ्यां शुशुभे विधिः ॥ १
इन्द्रादिसर्वदेवाश्च स्वस्ववाहनसंयुताः । अथ ते निर्ययुः सर्वे नानावाद्यानुमोदिताः ॥ १
कोटिकोटिगणाकीर्णा गौतमस्याऽऽश्रमं गताः । ब्रह्मविष्णुमहेशाना दृष्ट्वा तत्परमाद्भुतम् ॥ १
स्वभक्तं जीवयामास वामकोणनिरीक्षणात् । शंकरो गौतमं प्राह तुष्टोऽहं ते वरं वृणु ॥ १

गौतम उवाच—

यदि प्रसन्नो देवेश यदि देयो वरो मम । त्वल्लिङ्गार्चनसामर्थ्यं नित्यमस्तु महेश्वर ॥ १
वृतमेतन्मया देव शृणुष्वैतत्त्रिलोचन । मम शिष्यो महाभागो हेयाहेयादिवर्जितः ॥ १
प्रेक्षणीयं ममत्वेन न च पश्यति चक्षुषा । न घ्राणेन च घ्रातव्यं न दातव्यं न चेतरत् ॥ १
इति बुद्ध्वा तथा कुर्वन्स हि योगी महायशाः । उन्मत्तविकृताकारः शंकरात्मेति कीर्तितः १
न कश्चित्तं प्रति द्विष्यान्न च तं हिंसयेदिति । एतन्मे दीयतां देव एतेषाममृतिस्तथा ॥ १

श्रीभगवानुवाच—

आकल्पमेते जीवन्तु ततो मुक्तिं भजन्तु च । त्वया कृतमिदं वेश्म विस्तृतं विकृतं शुभम् ॥
तिष्ठामः क्षणमात्रं तु ततो यास्यामि मन्दिरम् ॥ १

गौतम उवाच—

अयोग्यं प्रार्थयामीश ह्यर्थी दोषं न पश्यति । ब्रह्माद्यलभ्यं देवेश दीयतां यदि रोचते ॥ १
अथेशो विष्णुमालोक्य गृहीत्वा तु करं हरेः । प्रहसन्नम्बुजाभाक्षमित्युवाच सदाशिवः ॥ १

---

१ ख. ग. नन्दकेन । २ ख. ग. मुनिः । ३ क. 'नाविद्या' ।

श्रीशिव उवाच—

ोदरोऽसि गोविन्द देयं ते भोजनं किमु । स्वयं प्रविश्य यदि वा स्वयं भुङ्क्ष्व स्वगेहवत्

वा पार्वतीमेई या कुक्षिं पूरयिष्यति । इत्युक्त्वा तत्करालम्बो एकान्तमगमद्विभुः ॥१४४

श्य नन्दिनं देवो द्वाराध्यक्षं यथोक्तवत् । गौतमं च उवाचाथ उत्तरं विष्णुभाषणम् १४५

श्रीशिव उवाच—

याम्नं सर्वेषां भोक्तुकामा वयं मुने । इत्युक्त्वैकान्तमगमद्वासुदेवेन शंकरः ॥ १४६

य्यां समारुह्य शयितौ देवतोत्तमौ । अन्योन्यं भाषणं कृत्वा प्रोत्तस्थतुरुभावपि ॥ १४७

तटाकं गम्भीरं स्नास्यन्तौ देवसत्तमौ । कराम्बुपातमन्योन्यं पृथक्कृत्वोभयत्र च ८ १४८

ो राक्षसाश्चैव जलक्रीडां प्रचक्रिरे । अथ विष्णुर्महेशश्च जलपातानि शीघ्रतः ॥ १४९

तुः शंकरः पद्मकिञ्जल्काञ्जलिना हरेः । अवाकिरन्मुखे तस्य पद्मोत्फुल्लविलोचने ॥ १५०

केशरसंपाताच्यमीलयत केशवः । अत्रान्तरे हरेः स्कन्धमारुरोह महेश्वरः ॥ १५१

तमाङ्गं बाहुभ्यां गृहीत्वा स न्यमज्जयत् । उन्मज्जयित्वा च पुनः पुनश्चापि पुनः पुनः १५२

डेतः स हरिः सूक्ष्मं पातयामास शंकरम् । अथ पादौ गृहीत्वा तमाचकर्ष चाभ्रामयत् ॥

ाडयद्धरेर्वक्षः पातयामास चाच्युतम् ॥ १५३

ोत्थितो हरिस्तोयमादायाञ्जलिना ततः । अवाकिरदथो शंभुरथ विष्णुरथो हरिः(रः)॥१५४

क्रीडैवमभवदथ चर्षिगणान्तरे । जलक्रीडासंभ्रमेण विस्रस्तजटबन्धनाः ॥ १५५

संभ्रमतस्ते(तां ते)षामन्योन्यं जटबन्धनम् । इतरेतरबद्धासु जटासु च मुनीश्वराः ॥ १५६

क्तमन्तोऽशक्तिमत आकर्षन्ति च सव्यथम् । पातयन्तोऽन्यतश्चापि क्रोशन्तो रुदतस्तथा१५७

ं प्रवृत्ते तुमुले संभूते तोयकर्मणि । आकाशे नारदो हृष्टो ननर्त च ननाद च ॥ १५८

पञ्चीं नादयन्वाद्यं ललितां गीतिमुज्जगौ । सुगीत्या ललितायास्तु ह्यगायत विधा दश ॥१५९

श्राव गीतिं मधुरां शंकरो लोकभावनः । स्वयं गातुं हि ललितं मन्दं मन्दं प्रचक्रमे ॥ १६०

यं गायति देवेशे मिश्रा मङ्गलकैशिकी । नारदे नृत्यमाने तु गायति स्वरभेदिनि ॥ १६१

रं ध्रुवं समादाय सर्वलक्षणसंयुतम् । स्वधारामृतसंयुक्तं गानेनैवमयोजयत् ॥ १६२

ुदेवो मर्दलं च कराभ्यामृतमाहनत् । आवेगाहंश्चतुर्वक्त्रस्तुम्बुरुर्मुखरो बभौ ॥ १६३

का गौतमाद्यास्तु तूष्णीं गातुं च वायुजः । गायके मधुरं गीतं हनूमति कपीश्वरे ॥ १६४

ानमम्लानमभवत्कृशाः पुष्टास्तदाऽभवन् । स्वां स्वां गीतिमतः सर्वे तिरस्कृत्यैव मूर्छिताः ॥

ीं भूतं समभवद्देवर्षिगणदानवम् । एकः स हनुमान्गाता श्रोतारः सर्व एव ते ॥ १६६

ाह्नकाले वितते भोजनावसरे सति । दुकूलयुग्ममाधत्त शृण्वन्गीतिं महेश्वरः ॥ १६७

वस्त्रद्वयं विष्णुरारक्तं चतुराननः । स्वस्वाहार्ण्यथ सर्वेऽपि कृत्यं कृत्वाऽपि कालिकम्॥ १६८

र्वे वाहनमारुह्य निर्गताः सर्वदेवताः । गानप्रियो महेशस्तु जगाद प्लवगेश्वरम् ॥ १६९

श्रीशिव उवाच—

ा त्वं मयाऽऽज्ञप्तो निःशङ्कं वृषमारुह । मम चाभिमुखो भूत्वा गायस्वाशेषगायनम् ॥ १७०

---

१ झ. ञ. °लकौशि° । २ झ. ञ. गायन्ति । ३ झ. ञ. ध्रुवं । ४ ख. ङ. च. छ. ट. ड. °भ्रामिरमा° । ५ ख. ङ.

छ. ड. °वजाह्वय° ।

अथाऽऽह कपिशार्दूलो भगवन्तं महेश्वरम् । वृषभारोहसामर्थ्यं तव नान्यस्य विद्यते ॥
तव वाहनमारुह्य पातकी स्यामहं प्रभो । मामेवाऽऽरुह देवेश विहंगः शिवधारणः ॥
तव चाभिमुखं गानं करिष्यामि विलोकय । अथेश्वरो हनूमन्तमारुरोह वृषं यथा ॥
आरूढे शंकरे देवे हनूमान्कंधराशिरः । छित्त्वा त्वचं परावृत्य मुखं गायति पूर्ववत् ॥
शृण्वन्गीतिसुधां शंभुर्गौतमस्य गृहं ततः । सर्वे चाप्यागतास्तत्र देवर्षिगणदानवाः ॥
पूजिता गौतमेनाथ भोजनावसरे सति । यच्छुष्कदारुसंभूतं गृहोपस्करणादिकम् ॥
प्ररूढमभवत्सर्वं गायमाने हनूमति । तस्मिन्गाने समस्तानां चित्रदृष्टिरतिष्ठत ॥

द्विबाहुरीशस्य पदाभिवन्दनः समस्तगात्राभरणोपपन्नः ।
प्रसन्नमूर्तिस्तरुणः सुमध्ये विन्यस्तमूर्धाञ्जलिभिः सुरेभिः(?) ॥
शिरः कराभ्यां परिगृह्य शंकरो हनूमतः पूर्वमुखं चकार ।
पद्मासनासीनहनूमतोऽञ्जलौ निधाय पादं त्वपरं मुखे च ॥
पादाङ्गुलीभ्यामथ नासिकां विभुः स्नेहेन जग्राह च मन्दमन्दम् ।
स्कन्धे मुखे त्वंसतले च कण्ठे वक्षःस्थले च स्तनमध्यमे हृदि ॥
ततश्च कुक्षावथ नाभिमण्डले ततो द्वितीयं न्यदधात्तु चाञ्जलौ ।
शिरो गृहीत्वाऽवनमप्यशंकरः(?)पस्पर्श पृष्ठं चुबुकेन सध्वनिः ॥
हारं च मुक्तापरिकल्पितं शिवो हनूमतः कण्ठगतं चकार ॥

अथ विष्णुर्महेशानमिदं वचनमुक्तवान् । हनूमता समो नास्ति कृत्स्नब्रह्माण्डमण्डले ॥
श्रुतिदेवाद्यगम्यं हि पदं तव कपिस्थितम् । सर्वोपनिषदव्यक्तं त्वत्पदं कपिसर्वयुक् ॥
यमादिसाधनैर्योगैर्न क्षणं ते पदं स्थितम् । महायोगिहृदम्भोजे बलं स्वच्छं हनूमति ॥
वर्षकोटिसहस्रेषु तपः कृत्वा तु दुष्करम् । त्वद्रूपं नाभिजानन्ति कुतः पादं मुनीश्वराः ॥
अहो भाग्यं विचित्रं हि चपलो वानरो मृगः । धत्ते पादयुगं चाङ्गे योगिहृद्यपि न क्षमम्
मया वर्षसहस्रं तु सहस्राब्जैस्तथाऽन्वहम् । भक्त्या संपूजितोऽपीश पादो नो दर्शितस्त्वया
लोके वादो हि सुमहाञ्शंभुर्नारायणप्रियः । हरिः प्रियस्तथा शंभोर्न तादृग्भाग्यमस्ति मे

सदाशिव उवाच—

न त्वया सदृशो मह्यं प्रियोऽस्ति भगवन्हरे । पार्वती वा त्वया तुल्या न चान्यो विद्यते मम
अथ देवाय महते गौतमः प्रणिपत्य च । व्यज्ञापयदमेयात्मन्देवेहि करुणानिधे ॥
मध्याह्नोऽयं व्यतिक्रान्तो भुक्तिवेलाऽखिलस्य च । अथाऽऽचम्य महादेवो विष्णुना सहितो वि
प्रविश्य गौतमगृहं भोजनायोपचक्रमे ॥

रत्नाङ्गुलीयैरथ नूपुराभ्यां दुकूलबन्धेन तडित्सुकाञ्च्या ।
हारैरनेकैरथ कण्ठनिष्कयज्ञोपवीतोत्तरवाससी च ॥
विलम्बिचञ्चन्मणिकुण्डलेन सुपुष्पधम्मिल्लवरेण देवः ।
पञ्चाङ्गगन्धस्य विलेपनेन बाहङ्गदैः कङ्कणकाङ्गुलीयैः ॥

---

१ छ. ट. ड. गतः । २ ख. स्वरेभिः । ३ झ. ञ. °त्वा मन° ।

इत्थं विभूषितः शिवो निविष्ट उत्तमासने
स्वसंमुखं हरिं तथा न्यवेशयद्वरासने ॥
अन्योन्यसंमुखस्थितौ हरीशौ देवसत्तमौ
सुवर्णभाजनान्यथो ददौ स चापि गौतमः ॥ १९४
त्रिशत्प्रभेदभक्ष्यकान्सुपायसं चतुर्विधं
सुपक्वपाकजातकं शतद्वयं प्रकल्पितम् ॥
अपक्वमिश्रकं तथा शतत्रयं प्रकल्पितं
शतं शतं तथा सुकन्दशाककं तथा मुनिः ॥ १९५
शाकादि सर्षपान्वितं ददौ च पञ्चविंशतिं
सुशर्करादिकं तथा सुचूतदाडिमादिकम् ॥
मोचाफलं तु गोस्तनीं सुखर्जुनागरङ्गकं
जम्बूफलं प्रियालुकं विकङ्कतं फलं तथा ॥ १९६
एवमादीनि चान्यानि द्रव्याण्यर्प्य यथाविधि । दत्त्वाऽऽपोशनं च विप्रो भुंजध्वमिति चाब्रवीत् १९७
भुञ्जानेषु च सर्वेषु व्यजनं सूक्ष्मविस्तृतम् । गौतमः स्वयमादाय शिवविष्णू अवीजयत् ॥ १९८
परिहासमथो कर्तुमियेष परमेश्वरः । पश्य विष्णो हनूमन्तं कथं भुङ्क्ते स वानरः ॥ १९९
वानरं पश्यति हरौ मण्डकं विष्णुभाजने । चिक्षेप मुनिसंघेषु पश्यत्स्वपि महेश्वरः ॥ २००
हनूमते दत्तवांश्च स्वोच्छिष्टं पायसादिकम् । त्वदुच्छिष्टमभोज्यं तु तवैव वचनाद्विभो ॥ २०१
अनर्हं मम नैवेद्यं पत्रं पुष्पं फलं तथा । मह्यं निवेद्य सकलं कूप एव विनिक्षिपेत् ।
अभुक्ते त्वद्वचो नूनं भुक्ते चापि कृपा तव ॥ २०२

सदाशिव उवाच—

बाणलिङ्गे स्वयंभूते चन्द्रकान्ते हृदि स्थिते । चान्द्रायणसमं ज्ञेयं शंभोर्नैवेद्यभक्षणम् ॥ २०३
भुक्तिवेलेयमधुना तद्वैरस्यं कथान्तरात् । भुक्त्वा तु कथयिष्यामि निर्विशङ्कं विभुङ्क्ष्व तत् ।
अथासौ जलसंस्कारं कृतवान्गौतमो मुनिः ॥ २०४
आरक्तसुस्निग्धसुसूक्ष्मगात्राननेकधा धौतसुशोषिताङ्गान् ।
तडागतोयैः कतबीजघर्षितैर्विशोधितैस्तैः करकानपूरयत् ॥ २०५
नद्याः सैकतवेदिकां नवतरां संछाद्य सूक्ष्माम्बरैः
शुद्धैः श्वेततरैरथोपरि घटांस्तोयेन पूर्णान्क्षिपेत् ।
क्षिप्त्वा नालकजातिमास्तपुटकं तत्कौलकस्तूरिका-
चूर्णं चन्दनचन्द्ररश्मिविशदां मालां पुटान्तां क्षिपेत् ॥ २०६
यामस्यापि पुनश्च वारि वसनेनाऽऽशोध्य कुम्भे क्षिपे-
च्चन्द्रग्रन्थिमथो निधाय बकुलं क्षिप्त्वा तथा पाटलम् ॥ २०७
शेफालिस्तवकमथो जलं च तत्र विन्यस्य प्रथमत एव तोयशुद्धिम् ।
कृत्वाऽथो मृदुतरसूक्ष्मवस्त्रखण्डेनाऽऽवेष्टेत्स्फणिकमुखं च सूक्ष्मचन्द्रम् ॥ २०८
अनातपप्रदेशे तु निधाय करकानथ । मन्दवातसमोपेते सूक्ष्मव्यजनवीजिते ॥ २०९

१ भ. भुञ्जध्वं ।

अथ उर्वीश(र्वी सु)सलिलैः सिञ्चयेत्स्थणिकामपि । संस्कृताः स्वायतास्तत्र नरा नार्योऽथवा
तत्कन्या वा क्षालिताङ्घ्रा धौतमन्दाश्च वाससः (?) । मधुपिङ्गमनिर्यासमसान्द्रमगरुद्रवम् ॥ २
बाहुमूले च कण्ठे च विलिप्य सान्द्रमेव च । मस्तके जापकं न्यस्य पञ्चगन्धविलेपनम् ॥ २
पुष्पनद्धसुकेशास्तु ताः शुभाः स्युः सुनिर्मलाः । एवमेवार्चिता नार्य आसकुङ्कुमविग्रहाः ॥ २
युवत्यश्चारुसर्वाङ्ग्यो नितरां भूषणैरपि । एतादृग्वनिताभिर्वा नरैर्वा दापयेज्जलम् ॥ २
तेऽपि प्रदानसमये सूक्ष्मवस्त्राल्पवेष्टनम् । अथ वामकरे न्यस्य करकं पश्य तत्र हि ॥ २
दारिकान्यस्तमुन्मुच्य ततस्तोयं प्रदापयेत् । एवं सत्कारयामास गौतमो भगवान्मुनिः ॥ २
महेशादिषु सर्वेषु भुक्तवत्सु महात्मसु । प्रक्षालिताङ्घ्रिहस्तेषु गन्धोद्वर्तितपाणिषु ॥ २
तदाऽऽसनसमासीने देवदेवे महेश्वरे । अथ नीचसमासीना देवाः सर्षिगणास्तथा ॥ २
मणिपात्रेषु संवेष्ट्य पूगखण्डान्सुधूपितान् । [3]अकोणवर्तुलान्स्थूलानसूक्ष्मानकृशानपि ॥ २
श्वेतपात्राणि संशोध्य क्षिप्त्वा कर्पूरखण्डकम् । चूर्णं च शंकरायाथ निवेदयति गौतमे ॥ २
गृहाण देव ताम्बूलमित्युक्तवचने मुनौ । कपे गृहाण ताम्बूलं प्रयच्छ मम खण्डकान् ॥ २
उवाच वानरो नास्ति मम शुद्धिर्महेश्वर । अनेकफलभक्तत्वाद्वानरस्तु शुचिः कथम् ॥ २

सदाशिव उवाच—

मद्वाक्यादखिलं शुध्येन्मद्वाक्यादमृतं विषम् । मद्वाक्यादखिला वेदा मद्वाक्याद्देवतादयः ॥ २
मद्वाक्याद्धर्मविज्ञानं मद्वाक्यान्मोक्ष उच्यते । पुराणान्यागमाश्चैव स्मृतयो मम वाक्यतः ॥ २
अतो गृहाण ताम्बूलं मम दद्याः सुखण्डकान् । हरिर्वामकरेणादात्ताम्बूलं पूगखण्डकम् ॥ २
ततः पत्राणि संगृह्य ततः खण्डान्समार्पयत् । कर्पूरमग्रतो दत्तं गृहीत्वाऽभक्षयच्छिवः ॥ २
देवे तु कृतताम्बूले पार्वती मन्दि(न्द)राचलात् । जयाविजययोर्हस्तं गृहीत्वाऽयान्मुनेर्गृहम् २
देवपादौ ततो नत्वा विनम्रम(व)दनाऽभवत् । उन्नमय्य मुखं तस्या इदमाह त्रिलोचनः ॥ २
त्वदर्थे देवदेवेशि ह्यपराधः कृतो मया । यत्त्वां विहाय भुक्तं हि तथाऽन्यच्छृणु सुन्दरि ॥ २
अथ स्वमन्दिरे स्थाप्य देवदेवविवर्जिते । सर्वैर्बन्धविमुक्ते च महदेनो मया कृतम् ॥ २
क्षन्तुमर्हसि देवेशि त्यक्तकोपा विलोकय । न बभाषैवमुक्ता सा अरुन्धत्या हि निर्ययौ ॥ २
निर्गच्छन्तीं मुनिर्ज्ञात्वा दण्डवत्प्रणनाम च । तदारभ्य महेशाय दण्डप्रणतिसंस्तुतिम् ॥
कुर्वन्नुवाच च शिवा गौतम त्वं किमिच्छसि ॥ २

गौतम उवाच—

कृतकृत्योऽस्मि देवेशि यदि देयो वरो मम । मन्मन्दिरे महाभागे भोक्तुमर्हसि सांप्रतम् ॥ २

देव्युवाच—

भोक्ष्यामि तव गेहेऽहं शंकरानुमता मुने । गत्वेशं गौतमो विप्रो लब्धानुज्ञः पुनर्गतिः ॥ २
भोजयामास गिरिजां देवीं चारुन्धतीं तथा । भुक्त्वाऽथ पार्वती सर्वं गन्धपुष्पसुभूषणा ॥ २
सहानुचरकन्याभिः सहस्राभिर्हरं ययौ । अथाऽऽह शंकरो देवीं गच्छ गौतममन्दिरम् ॥ २
संध्योपास्तिमहं कृत्वा ह्यागच्छामि पुनर्गृहम् । इत्युक्ता प्रययौ देवी गौतमस्यैव मन्दिरम् ॥ २
संध्यावन्दनकामाश्च सर्व एव विनिर्गताः । कृतसंध्यास्तटाके तु महेशाद्यास्तु कृत्स्नशः ॥ २
अथोत्तरमुखः शंभुर्न्यासं कृत्वा जजाप ह । अथ विष्णुर्महातेजा महेशमिदमब्रवीत् ॥ २

१ म. जयकं । २ अ. अनेकव° । ३ म. °न्मोद उ° । ४ छ. ब. °बन्धुवि° ।

विष्णुरुवाच—

मस्यते यस्तु सर्वैरेव समर्च्यते । हूयते सर्वयज्ञेषु स भवान्किं जपिष्यति ॥ २४०
ताञ्जलयः सर्वे त्वामेवैकमुपासते । स भवान्देवदेवेश कस्मै वा रचिताञ्जलिः ॥ २४१
कारादिपुण्यानां फलदस्त्वं महेश्वरः । तव कः फलदो वन्द्यः को वा त्वत्तोऽधिको वद २४२

शंकर उवाच—

ये न किंचिद्गोविन्द न नमस्ये ह किंचन । नोपास्ये कंचन हरे न जपिष्ये ह किंचन ॥ २४३
तु नास्तिकजन्तूनां प्रवृत्त्यर्थमिदं मया । दर्शनीयं हरे ते स्युरन्यथा पापकारिणः ॥ २४४
ल्लोकोपकारार्थमिदं सर्वं कृतं मया । ओमित्युक्त्वा हरिरथ तं नत्वा समतिष्ठत ॥ २४५
ते गौतमगृहं प्राप्ता देवगणर्षयः । सर्वे पूजामथो चक्रुर्देवाय शूलिने सदा ॥ २४६
ो हनूमता सार्धं गायन्नास्ते रघूत्तम । पञ्चाक्षरीं महाविद्यां सर्व एव तदाऽजपन् ॥ २४७
मत्करमालम्ब्य देव्यभ्याशं गतो हरः । एकशय्यासमासीनौ तावुभौ देवदंपती ॥ २४८
यन्नास्ते स हनुमांस्तुम्बरुर्नारदस्तथा । नानाविधविलासांश्च चकार परमेश्वरः ॥
ाहूय पार्वतीमीश इदं वाक्यमुवाच ह ॥ २४९

श्रीशिव उवाच—

वयिष्यामि धम्मिल्लमेहि मत्पुरतः शुभे ॥ २५०
व्याह न च युक्तं तद्भर्त्रा शुश्रूषणं स्त्रियाः । केशप्रसाधनकृतावनर्थान्तरमापतेत् ॥ २५१
शप्रसाधने देवे(व) तत्त्वं सर्वं न चेप्सितम् । अथ बन्धे कृते पश्चादंसप्रान्तप्रमार्जनम् ॥ २५२
नोश्वरमसंलग्नं केशपुष्पादिमार्जनम् । एतस्मिन्वर्तमाने तु महात्मानो यथाऽऽगमन् ॥ २५३
दा किमुत्तरं वाच्यं तव देवादिवन्दिनः । नाऽऽयान्ति चेदथ विभो भीतिर्नाशमुपैष्यति ॥२५४
वं हि भाषमाणां तां करेणाऽऽकृष्य शंकरः । स्त्रोर्वोस्तां स्थापयित्वैव विस्रस्य कचबन्धनम् ॥
भज्य च कराभ्यां स प्रससार नखैरपि । विष्णुदत्तां पारिजातस्रजं कचगतामपि ॥ २५६
त्वा धम्मिल्लमकरोदथ मालां करागताम् । मल्लिकास्रजमादाय बबन्ध कचबन्धने ॥ २५७
ल्पप्रसूनमालां च ब्रह्मदत्तां महेश्वरः । पार्वतीवसने गूढगन्धाढ्ये च समाददात् ॥ २५८
र्थांसपृष्ठसंलग्नमार्जनं कृतवान्विभुः । श्लथनीवेरधो देव्या वस्त्रवेष्टेरधो गतः ॥ २५९
वः किमिदमित्युक्त्वा नीवीबन्धं चकार ह । नासाभूषणमेतत्ते पश्यामि समदा ततः ॥ २६०
युक्त्वा स्वयमादाय विच्छायं मौक्तिकं सति । हरिद्रायाः समायोगे मुक्ताफलमदीप्तिमत् ॥
ं न ध्रियतां मुक्ताफलं मम तव प्रियम् ॥ २६१

पार्वत्युवाच—

ो त्वन्मन्दिरे शंभो सर्ववस्तु समृद्धिमत् । पूर्वमेव मया सर्वं वस्तु ज्ञातं विभूषणैः ॥ २६२
ो द्रविणसंपत्तिर्भूषणैरवगम्यते । शिरो विभूषितं देव ब्रह्मशीर्षस्य मालया ॥ २६३
कस्य तथा मौला वक्षःस्थलविभूषणम् । शेषश्च वासुकिश्चैव सविषौ तव कङ्कणे ॥ २६४
शोऽम्बरे जटा केशा भसितं चाङ्गरागकम् । महोक्षो वाहनं गोत्रं कुलं चाज्ञातमेव च ॥ २६५
येते पितरौ नैव विरूपाक्षं तथा वपुः । एवं वदन्तीं गिरिजां विष्णुः माहातिकोपनः ॥ २६६

---

१ क ॰प्रदत्तां महेश्वर । न॰ । २ ख. नरस्य । ३ झ. ञ. बाला ।

विष्णुरुवाच—

किमर्थं निन्दसे देवि देवदेवं जगत्पतिम् । दुष्प्राणा न प्रिया भद्रे तव नूनमसंयमम् ॥ २
यत्रेशनिन्दनं भद्रे तत्र नो मरणं व्रतम् । इत्युक्त्वाऽथ नखाभ्यां हि हरिश्छेत्तुं शिरो गतः २
महेशस्तत्करं गृह्य प्राह मा साहसं कृथाः । पार्वतीवचनं सर्वं प्रियं मम न चाप्रियम् ॥ २
ममाप्रियं हृषीकेश कर्तुं यत्किंचिदिष्यते । ओमित्युक्त्वाऽथ भगवांस्तूष्णींभूतोऽभवद्धरिः २
हनूमानथ देवाय व्यज्ञापयदिदं वचः । अर्थयामि विनिष्कामं मम पूजाव्रतं तथा ॥ २
पूजार्थमप्यहं गच्छे ममानुज्ञातुमर्हसि ॥ २

शंकर उवाच—

कस्य पूजा क वा पूजा किं पुष्पं किं दलं वद । को गुरुः कश्च मन्त्रस्ते कीदृशं पूजनं तथा २
एवं वदति देवेशे हनूमान्भीतिकम्पितः । वेपमानसमस्ताङ्गः स्तोतुमेव प्रचक्रमे ॥ २

हनूमानुवाच—

नमो देवाय महते शंकरायामितात्मने । योगिने योगधात्रे च योगिनां गुरवे नमः ॥ २
योगिगम्याय देवाय ज्ञानिनां पतये नमः । वेदानां पतये तुभ्यं देवानां पतये नमः ॥ २
ध्यानाय ध्यानगम्याय ध्यातॄणां गुरवे नमः । शिष्टाय शिष्टगम्याय भूम्यादिपतये नमः ॥२
अम्भस्येत्यादीनां वेदवाक्यानां पतये नमः । आतनुष्वेतिवाक्यैश्च प्रतिपाद्याय ते नमः ॥ २
अष्टमूर्ते नमस्तुभ्यं पशूनां पतये नमः । त्र्यम्बकाय त्रिनेत्राय सोमसूर्याग्निलोचन ॥ २
सुभृङ्गराजधत्तूरद्रोणपुष्पप्रियस्य ते । बृहतीपूगपुन्नागचम्पकादिप्रियाय च ॥ २
नमस्तेऽस्तु नमस्तेऽस्तु भूय एव नमो नमः । शिवो हरिमथ प्राह मा भैषीर्वद मेऽखिलम् ॥२

हनूमानुवाच—

शिवलिङ्गार्चनं कार्यं भस्मोद्धूलितदेहिना । दिवासंपादितैस्तोयैः पुष्पाद्यैरपि तादृशैः ॥ २
देव विज्ञापयिष्यामि शिवपूजाविधिं शुभम् । सायंकाले तु संप्राप्ते ह्यशिरःस्नानमाचरेत् ॥ २
क्षालितं वसनं शुष्कं ध्या(धृ)त्वाऽऽचम्य द्विरग्रधीः । अथ भस्म समादाय त्वाग्नेयं स्नानमा२
प्रणवेन समामन्त्र्याप्यष्टवारमथापि वा । पञ्चाक्षरेण मन्त्रेण नाम्ना वा येन केनचित् ॥ २
सप्ताभिमन्त्रितं भस्म दर्भपाणिः समाहरेत् । ईशानः सर्वविद्यानामुक्त्वा शिरसि पातयेत् ॥२
तत्पुरुषाय विद्महे मुखे भस्म प्रसेचयेत् । अघोरेभ्योऽथ घोरेभ्यो भस्म वक्षसि निक्षिपेत् २
वामदेवाय नम इति गुह्यस्थाने विनिक्षिपेत् । सद्योजातं प्रपद्यामि निक्षिपेदथ पादयोः ॥ २
उद्धूलयेत्समस्ताङ्गं प्रणवेन विचक्षणः । त्रैवर्णिकानामुदितः स्नानादिर्विधिरुत्तमः ॥ २
शूद्रादीनां प्रवक्ष्यामि यदुक्तं [*गुरुणा तथा । शिवेति पदमुच्चार्य भस्म संमन्त्रयेत्सुधीः ॥ २
सप्तवारमथाऽऽदाय शिवायेति शिरः क्षिपेत् । शंकराय मुखे प्रोक्तं] सर्वज्ञाय हृदि क्षिपेत् २
स्थाणवे नम इत्युक्त्वा गुह्ये चापि स्वयंभुवे । उच्चार्य पादयोः क्षिप्त्वा भस्म शुद्धमतः परम्
नमः शिवायेत्युच्चार्य सर्वाङ्गोद्धूलनं स्मृतम् । प्रक्षाल्य हस्तावाचम्य दर्भपाणिः समाहितः २
दर्भाभावे सुवर्णं स्यात्तदभावे गवालकः । तद्भा(दभा)वे न (तु) दूर्वाः स्युस्तदभावे तु राज

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. ञ. ट. ड. पुस्तकस्थः ।

१ ख. ङ. च. छ. ट. ड. योगग°। २ ञ. °वे ततद्°।

पार्स्ति जपं देव्याः कृत्वा देवगृहं व्रजेत् । देववेदिमथो वाऽपि कल्पितं स्थण्डिलं तु वा ॥
यं कलितं शुद्धं पद्मादिरचनायुतम् । चातुर्वर्णकरङ्गैश्च श्वेतेनैकेन वा पुनः ॥ २९६
त्राणि च पद्मानि स्वस्तिकादि तथैव च । उत्पलादिगदाशङ्खत्रिशूलडमरुं त(रू्स्त)था २९७
क(?)पश्चप्रासादं शिवलिङ्गमथैव च । सर्वकामफलं वृक्षं कुलकं कोलकं तथा ॥ २९८
ं चित्रकोणं च नवकोणमथापि वा । कोणद्वादशकां दोलां पादुकाव्यजनानि च ॥ २९९
च्छत्रयुगलं विष्णुब्रह्मादिकं तथा । चूर्णैर्विरचयेद्वेद्यां धीमान्देवालयेऽपि वा ॥ ३००
पि देवपूजा स्यात्तत्रैवं कल्पयेद्बुधः । स्वहस्तरचितं मुख्यं क्रीतं चैव तु मध्यमम् ॥ ३०१
तं तु कनिष्ठं स्याद्बलात्कारमथाधमम् । अर्हेषु यस्त्वनर्हेषु बलात्कारात्तु निष्फलम् ॥ ३०२
शालिजपास्था(?)ण(णु)कलमासितरक्तकैः । तण्डुलैर्व्रीहिमात्रोत्थैः कणैश्चैव यथाक्रमम् ३०३
मैर्मध्यमैश्चैव कथितैरधमैस्तथा । पद्मादिस्थापनैरेव तत्सम्यग्यागमाचरेत् ॥ ३०४
त्तरमुखो वाऽपि यदि वा प्राङ्मुखो भवेत् । आसनं च प्रवक्ष्यामि यथादृष्टं यथाश्रुतम् ३०५
ं चार्म चैलतल्पे दारवं तालपत्रकम् । काम्बलं काञ्चनं चैव राजतं ताम्रमेव च ॥ ३०६
करीषार्कजैर्वाऽपि त्वासनं परिकल्पयेत् । वैयाघ्रं रौरवं चैव हारिणं मार्गमेव च ॥ ३०७
र्म चतुर्विधं ज्ञेयमथ बन्धुकमेव च । यथासंभवमेतेषु ह्यासनं परिकल्पयेत् ॥ ३०८
पद्मासनो वाऽपि स्वस्तिकासन एव च । दर्भभस्मसमासीनः प्राणानायम्य वाग्यतः ॥ ३०९
त्स देवतारूपो ध्यानं चान्तः समाचरेत् । शिखान्ते द्वादशाङ्गुल्ये स्थितं सूक्ष्मां तनूं(क्ष्मतनूं) शिवम्
तश्चरन्तं भूतेषु गुहायां विश्वमूर्तिषु । सर्वाभरणसंयुक्तमणिमादिगुणान्वितम् ॥ ३११
त्वा तं धारयेच्चित्ते तद्व्याप्त्या पूरयेत्तनुम् । तया दीप्त्या शरीरस्थं पापं नाशमुपागतम् ३१२
स्वर्णपारदसंपर्काद्रक्तं श्वेतं यथा भवेत् । तद्द्वादशदलावृत्तमष्ट पञ्च त्रिरेव वा ॥ ३१३
रिकल्प्याऽऽसनं शुद्धं तत्र लिङ्गं निधाय च । गुहास्थितं] महेशानं लिङ्गे संचिन्तयेत्तथा ॥ ३१४
धिते कलशे तोयं शोधितं गन्धवासितम् । सुगन्धपुष्पं निक्षिप्य प्रणवेनाभिमन्त्रितम् ॥ ३१५
णायामश्च प्रणवः शूद्रेषु न विधीयते । प्राणायामपदे ध्यानं शिवेत्योंकारमन्त्रणम् ॥ ३१६
धपुष्पाक्षतादीनि पूजाद्रव्याणि यानि च । तानि स्थाप्य समीपे तु ततः संकल्प इष्यते ३१७
वपूजां करिष्यामि शिवतुष्ट्यर्थमेव च । इति संकल्पयित्वा तु तत आवाहनादिकम् ॥ ३१८
वा तु स्नानपर्यन्तं ततः स्नानं प्रकल्पयेत् । नमस्तेत्यादिमन्त्रेण शतरुद्रियविधानतः ॥ ३१९
विच्छिन्ना तु या धारा मुक्तिधारेति कीर्तिता । तया यः स्नापयेन्मासं जपन्रुद्रमुपांशु वा ३२०
वारं त्रिवारं च पञ्च सप्त नवापि वा । एकादशमथो वारमथैकादश चा(थ त्रयोदशा)न्वितम्
कस्नानमिदं ज्ञेयं मासं मोक्षप्रदायकम् । शैवया विद्यया स्नानं केवलप्रणवेन वा ॥ ३२२
यैर्नालिकेरस्य शकलैश्चोर्मिभिस्तथा । कांस्येन मुक्ताशुक्त्या च पुष्पादिकसरेण वा ॥ ३२३
पयेद्देवदेवेशं यथासंभवमीरितैः । शृङ्गस्य च विधिं वक्ष्ये स्नानयोग्यं यथा भवेत् ॥ ३२४
न्तस्तु संशोध्य बहिरन्तस्तु शोधयेत् । सुस्निग्धं लघु कृत्वाऽथ नागं छिन्द्यात्कथंचन ॥ ३२५
कदेशविन्यस्तद्वारद्रोण्या सुवृत्तयोः(या) । कुशाग्रयुतया स्नानं देवाय परिकल्पयेत् ॥ ३२६
गवयशृङ्गस्य जलपूर्तिरथोच्यते । द्वारे निषिद्धलोहार्धे संधिद्वारासमन्विते(?) ॥ ३२७

* धनुश्चिह्नान्तर्गतः पाठः ख. ङ. च. छ. ट. ड. पुस्तकस्थः ।

१ ज. कैशं । २ झ. ञ. भृ । महे ।

योगवक्रं नागदण्डं नागाकारं प्रकल्पयेत् । फलस्थाने तु चषकं दण्डेन समरन्ध्रकम् ॥
तत्रैव पातयेत्तोयं मूर्धयत्रघटे स्थितम् । पातयेदथ चान्येन वामेनैव करेण वा ॥
मुक्तिधारा कृता तेन पवित्रं पापनाशनम् । एवं संस्थाप्य देवेशं पञ्चगव्यैस्तथैव च ॥
पञ्चामृतैरथ स्नाप्य मधुरत्रितयेन च । विभूष्य भूषकैर्देवं पुनः स्नाप्य महेश्वरम् ॥
शीतोपचारं कृत्वाऽथ तत आचमनादिकम् । वस्त्रं तथोपवीतं च पञ्चगन्धकमेव च ॥
कर्पूरमरुवं चापि पटीरमथवा भवेत् । उभयं मिश्रितं वाऽपि शिवलिङ्गं प्रपूजयेत् ॥
कृत्स्नं पीठं गन्धपूर्णं यद्वा विभवसारतः । तूष्णीमथोपचारं वा कालियं पुष्पमर्पयेत् ॥
श्रीपत्रं मरुचित्याजं(?) यथाशक्त्याऽखिलं यथा । अनेकधूपद्रव्यं च गुग्गुलुं केवलं तथा
कपिलाघृतसंयुक्तं शर्वधूपाय शस्यते । धूपं दत्त्वा यथाशक्ति कपिलाघृतदीपकान् ॥
अथवा पू(आ)ज्यमात्रेण दीपान्दत्त्वोपहारकम् । यथाशक्त्युपपन्नं च दत्त्वा पुष्पसमन्वित
मुखशुद्धिं ततो गत्वा दत्त्वा ताम्बूलमादरात् । प्रदक्षिणनमस्कारौ पूजैवं हि समाप्यते ॥
गीत्यङ्गपञ्चकं पश्चात्तानि विज्ञापयामि ते । गीतिर्वाद्यं पुराणं च नृत्यं हासोक्तिरेव च ॥
नीराजनं च पुष्पाणामञ्जलिश्चाखिलार्पणम् । क्षमा चोद्वासनं चैव कीर्तिपञ्चोपचारकम् ।
भूषणं च तथा छत्रं चामरं व्यजनं तथा । शिवोपवीतं कैंकर्यं षडीशानोपचारकम् ॥
द्वात्रिंशदुपचारैस्तु यः समाराधयेच्छिवम् । एकेनाह्ना समस्तानां पापानां नाशनं ध्रुवम् ।
द्वात्रिंशदुपचारं स्यात्पूजनं तूत्तमोत्तमम् ॥

सदाशिव उवाच—

एवमेतत्कपिश्रेष्ठ तव पूजां वदाम्यहम् । मत्पादयुगुलं पूज्य सर्वपूजाकरो भव ॥
आराध्येत्थं यथा लिङ्गे तन्ममाऽऽराधनं कुरु ॥

हनूमानुवाच—

गुरुणा लिङ्गपूजैव नियता परिकल्पिता । तां करोमि पुरा देव पश्चात्त्वत्पादपूजनम् ॥
इत्युक्त्वैव नमस्येशं शिवलिङ्गार्चनेऽभवत् । सरस्तीरमथो गत्वा कृत्वा सैकतवेदिकाम् ॥
तालपत्रैर्विरचितमासनं पर्यकल्पयत् । प्रक्षाल्य पादहस्तौ तु समाचम्य समाहितः
भस्मस्नानमथो चक्रे पुनराचम्य वाग्यतः । देववेद्यामथो चक्रे पद्मानि सुमनोहरम् ॥
अनन्तरं तालपत्रे पद्मासनगतः कपिः । प्राणानायम्य सन्यासं शुक्लध्यानसमन्वितः ॥
प्रणम्य गुरुमीशानं जपन्नासीदतः परम् । अथ देवार्चनं कर्तुं यत्नमास्थितवानपि ॥
पलाशपत्रपुटकद्वयानीतजलं शुचि । शिरःकमण्डलुगतं निधायाग्नित्रिमन्त्रितम् ॥
आवाहनादि कृत्वाऽथ स्नानपर्यन्तमेव च । अथ स्नापयितुं देवमादाय करसंपुटे ॥
कृत्वा निरीक्षणं देवं(व)पीठं नो दृष्टवान्कपिः । लिङ्गमात्रं करगतं दृष्ट्वा भीतिसमन्वितः
इदमाह महायोगी किं वा पापं मया कृतम् । यदेतत्पीठरहितं शिवलिङ्गं करस्थितम् ॥
ममाद्य मरणं सिद्धं न पीठं चाऽऽगमिष्यति । अथ रुद्रं जपिष्यामि तदाऽऽयाति महेश्वर
इति निश्चित्य मनसा जजाप शतरुद्रियम् । अथापि न समायातो महेशोऽथ कपीश्वरः ।
रुद्रं न्यपातयद्भूम्यां वीरभद्रः समागतः । किमर्थं रुद्यते भक्त रुदिहेतुं वदस्व मे ॥
पीठहीनमिदं लिङ्गं पश्य मे पापसंचयम् ॥

वीरभद्र उवाच—

नाऽऽयाति पीठं ते लिङ्गं मा साहसं कृथाः। दाहयिष्याम्यहं लोकं यदि नाऽऽयाति पीठकम्
दर्शय मे लिङ्गं पीठं यद्यागतं न वा । अथ दृष्ट्वा वीरभद्रो लिङ्गं पीठमनागतम् ॥ ३५९
ामोऽखिलाँल्लोकान्वीरभद्रः प्रतापवान् । अनलं भुवि चिक्षेप क्षणाद्दग्धा मही तदा॥ ३६०
सप्त तलान्दग्ध्वा पुनरूर्ध्वमवर्तत । पञ्चोर्ध्वलोकानदहज्जनलोकनिवासिनः ॥ ३६१
नेत्रसंभूतं नखेनाऽऽदाय चानलम् । जम्बीरफलसंकाशं कृत्वा करतले विभुः ॥ ३६२
नाऽऽयाति पीठं ते दग्धा लोका न संशयः। अनायातमथो दृष्ट्वा वीरभद्रः प्रतापवान् ३६३
ादयो महात्मानो ज्ञात्वा योगेन चाऽऽगतान् । गौतमस्याऽऽश्रमवरं समागम्य महेश्वरम् ॥
ष्टुवन्तो देवादिसेव्यमानमपि द्विजाः । अस्तुवन्नथ च स्तोत्रैः सर्ववेदसमुद्भवैः ॥ ३६५

ॐनमो देवदेवाय तस्मै शुद्धप्रभाचिन्त्यरूपाय तस्मै ।
नमः सुराणामधीशाय तस्मै नमो नमो वेदगुह्याय तस्मै ॥ ३६६
नमः शिवायाऽऽदिदेवाय तस्मै नमो व्यालयज्ञोपवीताय तस्मै ।
नमः सुराबिन्दुसंदोहवर्षत्रयीबिन्दुविश्वंभराय तस्मै ॥ ३६७
पृथिव्यथो वायुराकाशतोयं पुनः शशी वह्निसूर्यौ तथाऽऽत्मा ।
यस्याष्टैता मूर्तयः शंकरस्य तस्मै नमो ज्ञानगम्याय शश्वत् ॥ ३६८

ां स्तुतिमथाऽऽकर्ण्य भगनेत्रप्रदः शिवः । विष्णुमाह च गच्छ त्वं समानय च तान्द्विजान् ३६९
नीतास्तेन हरिणा देवाय प्रणतास्तु ते । तानाह शंकरो वाक्यं किमर्थं यूयमागताः ॥ ३७०

मुनय ऊचुः—

ब द्वादशलोकानां दृश्यन्ते भस्मराशयः । स्थितमेकं वनमिदं पश्य तल्लोकसंक्षयम् ॥ ३७१

सदाशिव उवाच—

र्ध्वस्थपञ्चलोकानां दाहे संदेह एव नः । कथमङ्गारवृष्टिश्च कथं नो वा महाध्वनिः ॥ ३७२

मुनय ऊचुः—

ीतिरस्माकमधुना वर्तते वीरभद्रतः । स एवाङ्गारवृष्टिं च पिपासुरिव तामपात् ॥ ३७३
ोऽथ वीरमाहूय किं वीरेत्यब्रवीद्भवः । वीरो हनूमतो लिङ्गपीठाभावादिदं कृतम् ॥ ३७४
पेश्चित्तं परिज्ञातुं[1] मया कृतमिदं बृहत् । कृपानिधिरथो देवो यथापूर्वमकल्पयत् ॥ ३७५
धानप्यखिलाँल्लोकान्पूर्वतः शोभनान्विभुः । कल्पयामास विश्वात्मा वीरभद्रमथाब्रवीत् ॥ ३७६
लिङ्गयाऽऽघ्राय शिरसि ताम्बूलं दत्तवान्हरः। अथासौ हनुमानीशपूजनं कृतवानथ ॥ ३७७
कं वनचरं तत्र गन्धर्वं सविपञ्चिकम् । इदमाह महावीणा मम वै दीयतामिति ॥ ३७८
धर्वो न मया त्याज्या वीणा प्राणसमा मम। ममापि प्राणसदृशी वीणेत्याह कपीश्वरः ॥ ३७९
मुष्टिनिपातेन गन्धर्वे पतिते कपिः । आदाय वीणां महतीं स्वरतन्तुसमन्विताम् ॥ ३८०
ाबुसंयुतां कृत्वा राजवृक्षफलाकृतिम् । तस्योरसि विनिक्षिप्य गायन्नागाच्छिवान्तिकम्॥ ३८१
तीकुसुमैः शुद्धैर्देवपादावपूजयत् । तस्मै वरमथ प्रादादाकल्पं जीवितं पुनः ॥
द्रलङ्घने शक्तिं वरं प्रादादथापरम् ॥ ३८२

१ छ. ङ. परिज्ञातं ।

समस्तभूषासुविभूषिताङ्गः स्वदीप्तिमन्दीकृतदेवदीप्तिः ।
प्रसन्नमूर्तिस्तरुणः शिवाङ्कः संभावयामास समस्तदेवान् ॥ ३८
पीतमुद्रमनीयं च समादाय महेश्वरः । पीतवस्त्रमिदं देव त्वं गृहाण हरे शुभम् ॥ ३८
ब्रह्मणे रक्तवसनं सर्वेषां वस्त्रदस्तथा । देवर्षिदानवादीनां दत्तवान्वस्त्रयुग्मकम् ॥ ३८
रामोऽपि चैतदाकर्ण्य शंभवे युग्मम(मा)र्पयत् । सुसूक्ष्मं बहुमूल्यं च स्वर्णभूषणमेव च ॥ ३८
अथ भुक्त्वा सुखासीनः सामात्यः सपुरोहितः । नानामुनिगणैर्भूपैर्वानरैर्गौतमीतटे ॥ ३८
शंभुं पुराणतत्त्वज्ञं राघवो वाक्यमब्रवीत् । त्वमेव सर्वं जानीषे सर्वधर्मगुहाशतम् ॥ ३८
कस्मिन्कस्मिन्युगे ब्रह्मन्किं विशिष्टं वदस्व मे ॥ ३८

शंभुरुवाच—

ध्यानमेव कृते श्रेष्ठं त्रेतायां यज्ञमे(ए)व च । द्वापरे चार्चनं तिष्ये दानं च हरिकीर्तनम् ॥ ३९
सर्वं च शस्तं सर्वत्र ध्यानं नैव कलौ युगे । नराणां मुग्धचित्तत्वात्कलिस्थानां विशां पते ॥ ३९
न धर्मे नियता बुद्धिर्न वेदे नैव च स्मृतौ । न क्रतौ न स्वधाकारे पुराणानां च न श्रुतौ ॥ ३९
न जपे न च तीर्थेषु न च शुश्रूषणे सताम् । नेज्यायां देवतानां च न स्वजातीयकर्मणि ॥ ३९
न देवस्मरणे चापि न च कापि नृपे नृप । अतश्च दीर्घकालानां पुण्यानामक्षमा नराः ॥ ३९
दानं तु स्वल्पकालत्वात्कर्तुं शक्नोति मानवः । अतश्च कलिदुष्टानां प्रायश्चित्तं न विद्यते ॥ ३९
केषांचित्पापनाशः स्यात्प्रायश्चित्तैस्तु नान्यथा । ब्रह्मज्ञो न गयाश्राद्धं काशीगन्ता श्रुतौ रतः(?)
पुराणज्ञावमाश्चैते श्रोता तस्य न वाचकः(?) । युगानामनुसारेण तथाऽर्थस्य विवेचनात् ॥ ३९
स्वपरप्रत्ययोत्पादात्परब्रह्मप्रकाशनात् । पुराणवक्ता सर्वस्माद्ब्राह्मणस्तु विशिष्यते ॥ ३९
तेनापि च कृतं पापं न सज्येत्किमुतान्यतः । अन्येषामपि केषांचित्पुराणं पापनाशनम् ॥ ३९
यः पुराणेषु विश्वासी वक्तारं मन्यते गुरुम् । ब्रह्मविद्याप्रदातारं विशेषं ज्ञातिबन्धुतः ॥ ४०
तस्य पापानि सर्वाणि विलयं यान्त्यसंशयम् । अथ श्रीशैलगमनं पूजकस्य महेशितुः ॥ ४०
अतः कलौ मनुष्याणां पुराणं पापनाशनम् । पुरा कलियुगे[2] राम वृत्तं संकीर्तये शृणु ॥ ४०
आसीत्तु गौतमो नाम ब्राह्मणो वेदवर्जितः । तस्य पुष्टिः पशुश्चाऽऽस्तां भ्रातरौ वेदवर्जितौ ॥ ४०
ताभ्यां सह कृषिं चक्रे तत्र वृद्धिमवाप च । धनधान्यादिकं किंचिद्राजानं दत्तवानथ ॥ ४०
उवाच वचनं किंचिदधिकारं निरूप्य । अर्थं न गमयिष्यामि तौ शक्तौ भ्रातरौ मम ॥ ४०

राजोवाच—

ब्राह्मणस्याधिकारो हि वैदिके धर्मकर्मणि । तदन्यत्र नियुक्तस्य ब्राह्मण्यं विप्रणश्यति ॥ ४०

गौतम उवाच—

युगेष्वन्येषु धर्मोऽयं कलिधर्मो न तादृशः । भूपतित्वं हि भूपाल नृपाणां धर्म उच्यते ॥ ४०
ब्राह्मणश्च परिक्षीणस्तं कुर्वन्नैव दुष्यति । शूद्राणां च कृषिर्धर्मो नाऽऽपद्यप्यग्रजन्मनः ॥ ४०
तस्मात्क्षत्रेण वर्तिष्ये ग्रामान्मम समादिश । अन्यत्र चात्र क्षत्रेण वर्तनं मम रोचते ॥ ४०
अन्यत्र तु तथेत्युक्तो ददौ ग्रामान्द्विजस्य तु । ग्रामाधिकारदुष्टस्य वर्तनं त्वन्यथाऽभवत् ॥ ४१
अभक्षि मांसं चापायि सुरा चाभाषि दुर्वचः । परयोषा तथाऽगामि परस्वं प्रत्यहारि च ४१
अक्रीडि द्यूतमसकृत्कलङ्कं चाऽऽदि दुर्भुजा । नापूजि जगतामीशः शिवो वा विष्णुरेव वा ४१

१ झ. ञ. तस्यानुवा° । २ क. °गे नामव्रतं सं° ।

वं कालेन दुर्वृत्तं राजा वाक्यमभाषत । विप्र विप्रत्वमुत्सृज्य शूद्रत्वं प्राप्तवानसि ॥ ४१३
साभियोगधर्मेण भवन्तं भ्रंशयामि च । माऽस्तु विप्रत्वमद्यैव शूद्रतैव वरं मम ॥ ४१४
हते यदि विप्रास्ते न भोक्ष्यन्ति वरं मम । न हि सर्वमिदं युक्तं शक्तोऽहं पृथिवीपते ॥ ४१५
शंभुरुवाच—
वं वदति दुर्विप्रे राजा तूष्णीमतिष्ठत । स तु वै शूद्रतुल्यश्च बुभुजेऽन्नं सहामिषम् ॥ ४१६
दाचिदथ दुर्वृत्तः प्रतोलीमण्डपास्थितः । द्विजेन पठ्यमानं तु पद्यं तु श्रुतवानिदम् ॥ ४१७
दये पद्यमेतत्तु द्विजेरितमतिष्ठत । परात्परतरं यान्ति नारायणपरायणाः ॥
ते तत्र गमिष्यन्ति ये द्विषन्ति महेश्वरम् ॥ ४१८
याख्यानमपि च श्रुत्वा पौराणिकमभाषत । कीदृङ्नारायणः प्रोक्तः कीदृशोऽपि महेश्वरः ४१९
किं परं त्वयनं प्रोक्तं द्वेषः कीदृगुदाहृतः । किं तत्परमिति ख्यातं ततः परतरं च किम् ॥ ४२०
पौराणिक उवाच—
परं तद्ब्रह्मणः स्थानं सुखव्यक्तैकलक्षणम् । ततः परतरं विष्णोर्धाम तद्ब्रह्मणोऽधिकम् ॥ ४२१
अविनाशितया तत्तु कीर्तितं परमं पदम् । तन्मध्ये पुरुषो विष्णुस्तदङ्गपरमं +विभुः ॥ ४२२
आपो हि नरजन्मत्वान्नाराः प्रोक्ता मनीषिभिः । नाराश्चास्यायनं यस्मात्तेन नारायणः स्मृतः ॥
तत्परं वर्तनं येषां ते प्रोक्तास्तत्परायणाः । महदादीनि तत्त्वानि यानि तेषां य ईश्वरः ॥ ४२४
सूर्याग्निशशिनेत्रोऽसौ महेशः स्यादुमापतिः । द्वेषो हि वैरं विज्ञेयमीश्वरे परमात्मनि ॥ ४२५
शंभुरुवाच—
एवं पुराणभेदेन समीरितमिदं वचः । चिन्तयन्पुनरप्याह मादृशस्य कथं गतिः ॥ ४२६
पौराणिकोऽथ तं प्राह शृणु वक्ष्यामि ते गतिम् । कुरु सर्वेण यत्नेन प्रायश्चित्तं यथाविधि ४२७
धर्मं चापि यथाशक्ति यथाकालं यथाविधि । विमुक्तपापः पश्चात्त्वमुत्तमां गतिमेष्यसि ॥ ४२८
पुराणमथवा नित्यं शृणुष्वावहितश्च सन् । निराशो वा महेशानं पूजयस्व पिनाकिनम् ॥ ४२९
देवं वा पुण्डरीकाक्षं केशवं क्लेशनाशनम् । संन्यासमथवा नित्यं ब्रह्मज्ञानपरो भव ॥ ४३०
अथवा गच्छ काशीशं मुक्त्यैवामृतिमाप्नुहि । गयां वा गच्छ तत्र त्वं श्राद्धं कर्तुं प्रयत्नतः ४३१
अथवा सर्वदेवानां सारं पातकनाशनम् । रुद्रं रुद्रप्रियकरं जपन्प्रत्यहमादरात् ॥ ४३२
श्रीशैलमथवा गच्छ केदारमथ चेच्छया । अथवा प्रतिवर्षं तु माघस्नानं प्रवर्तय ॥ ४३३
किमत्र बहुनोक्तेन धर्मभक्तः सदा भव । नैवं नरकवासस्ते भविता तु द्विजाधम ॥ ४३४
गौतम उवाच—
त्वा सर्वं करिष्यामि पुराणं भवतो मुखात् । शास्त्रं विश्वासहेतुं च वर्ज्यं चापि वदस्व मे ४३५
पौराणिक उवाच—
र्ज्यं मांसं सुराऽन्यस्त्रीभोगो द्यूतं विकत्थनम् । पारुष्यमनृतं माया देवदेवविनिन्दनम् ॥ ४३६
रूणां पितृवृद्धानां पुराणस्मृतिभाषिणाम् । निन्दितं श्वेतवृन्ताकं कतकालाबुवर्तनम् ॥ ४३७
बीजपूरं कुसुम्भं च लोहितं शृङ्गमेव च । अररुं नालिकेरं च कूष्माण्डकं तथैव च ॥ ४३८
कोविदारफलं तैलपक्वं मानवजं पयः । वाघ्री(ध्री)णसखरीदुग्धं सूतकाक्षीरमाविकम् ॥ ४३९

+विभिवति क्वचित्पाठः ।

औष्ट्रमेकशफक्षीरं मार्गमार्जं नृसंभवम् । विवत्सासंधिनीक्षीरं लवणं चैव योगि यत् ॥
नालिकेररसं कांस्ये ताम्रे मधु च सीसके । काचे तक्रं करम्भांश्च घृताक्तांश्चैव कारयेत् ॥
होमं तु मृन्मये पात्रे पुरोडाशं तु राजते । न सेवेत परे लोके शुभार्थी तु विचक्षणः ॥
पात्रान्तश्चूर्णलेपोऽपि तत्र भक्षणमेव च । क्रमुकस्य तथा भक्षश्चूर्णपत्रस्य चैव हि ॥
क्रमुकस्यापि पक्वस्य भक्षणं क्रमियोगिनः । पायसे लवणं चैव केवलं च करार्पितम् ॥
सिन्धुसौराष्ट्रकाम्बोजमागधेषु च सिंहले । न दोषाय भवेत्तत्र क्षीरं च लवणान्वितम् ॥
क्षीराणि च समस्तानि लवणानि च योगि(ग)तः । देशेष्वन्येषु दोषाय पतेच्चैवेह संशयः ।
किमत्र बहुनोक्तेन सद्भिर्निन्द्यं विवर्जयेत् ॥

शंभुरुवाच—

एवं तस्य वचः श्रुत्वा ब्राह्मणस्य महात्मनः । स्वमेव भवनं गत्वा चिन्तयामास दुःखितः
रात्रौ मृत्युर्दिवा वेति न जानाति महानपि । परलोके सुखं दुःखमिह भोगविबोधितम् ॥
क्रिमिकीटमनुष्याद्यैः सुखदुःखैः पृथक्पृथक् । प्रतिजीवं तु हेतूनां भेदो हि सुविनिश्चयः ॥
एकस्यापि हि जीवस्य नास्ति चैकविधा स्थितिः । जन्मकाले महज्ज्ञानं शैशवेऽत्यल्पबोधन
स्खलत्पदेऽल्पविज्ञानं बाल्ये चाल्पं तथैव च । कौमारे क्रीडनासक्तं यौवने विषयोषितम् ॥
यौवने विनिवृत्ते तु द्रव्यसंपादनेषणा । वार्धके भोगलिप्सा च न च भोक्तुं क्षमोऽपि च ॥
दूषिकाश्लेष्मलालाभिर्वलीपलितकम्पनैः । श्वासकासवि(सानि)लाक्षिप्तो हृषीकैर्विकलैर्युतः
किंचिद्वक्तुं न शक्नोति न च जानाति किंचन । तिष्ठन्तीषु परस्त्रीषु गुह्यस्थानं प्रदर्शयन् ॥
कोशकण्डूयनपरः क्रूरो जीवितलक्षणैः । कण्डूयते स्फिचौ वस्त्रमुद्धृत्य च विचालयन् ॥
भुञ्जानः श्लेष्मणा ग्रासं ग्रसितुं न च शक्नुयात् । यदा कासस्तदा जज्ञे पायुवायुश्च शब्दवा
निःसृतिश्च मलस्यापि श्लेष्मनिर्गम एव च । स्नुषादिभर्त्सनं बालतालहास्यनिदर्शनम् ॥
गुरुनिर्गमनादीनि संचिन्त्य च पुनः पुनः । आहूतो भोजनाद्यर्थं भोज्याज्यादि विनिन्दयन्
चिरमुष्णं च निर्भर्त्स्य पुनश्चिन्तामवाप्य सः । अतिदुष्कृतकर्माऽहं कथं भोक्ष्ये कथं स्वपे
कथं तिष्ठे कथं गच्छे परलोकः कथं भवेत् । इतिचिन्ताकुलो नित्यं न नमत्यपरान्वितः ॥
द्विजस्य सदनं गत्वा पुराणज्ञस्य राघव । लज्जावाकृतवक्त्रश्च किं करोमीत्यभाषत ॥
न किंचिदप्युवाचासौ द्विजः पौराणिकस्तदा । पापोऽयमिति विज्ञाय शिष्येण +निरगामय
गौतमोऽपि विनिर्गत्य द्वार्येव च बहिः स्थितः । भुव्यासीनं तु विज्ञाय पुराणार्थविचारकम्
कथं कथमपि प्राप्य पीठं दत्तं च नाभजत् । निषण्णो भूतले राम पुराणज्ञमभाषत ॥
प्रायश्चित्तं करिष्यामि तदत्रैव विधीयताम् ॥

ब्राह्मण उवाच—

पापानि कीर्तयस्व त्वं सर्वथैव कृतानि तु । स चापि नाकृतं किंचिन्मया पापमितीरयन् ॥
रुदन्पपात भूम्यां च कथं तातेति पीडितः । ब्राह्मणस्तमथ प्राह प्रायश्चित्तं न विद्यते ॥
महापापे त्रिरावृत्ते पुनश्च यदि चेत्कृतम् ॥

+ आर्षत्वाद्ध्रस्वाभावः ।

१ झ. ञ. °सैमाञ्जनसं° । २ क. नालिकेरोदकं । ३ ङ. च. छ. ट. ड. °द्वन्तुं न । ४ झ. जीवति ल° ।

गौतम उवाच—

ाणिक महाभाग प्राप्यापि त्वामहं कथम् । पापयुक्तो द्विजश्रेष्ठ संगतिर्विफला भवेत् ॥ ४६८

पौराणिक उवाच—

ं प्रमाणं सर्वेषां प्रायश्चित्तविनिर्णये । तद्विना यो हि तद्ब्रूयात्प्रायश्चित्तं न तद्भवेत् ॥ ४६९
त्कृते सकृत्प्रोक्तं द्वितीये द्विगुणं भवेत् । तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिः ४७०
या कृतं तु बहुधा चतुर्विधमपीच्छया । कथं वक्तुमहं शक्तः प्रायश्चित्तं भवादृशे ॥ ४७१
तमोऽपि पुनः प्राह क्व गन्तव्यं मयेति च । पौराणिको द्विजो राम तूष्णीमेव बभूव ह ॥ ४७२
तमोऽपि महाशैलं श्रिया एव जगाम ह । अथ तत्र नदीं स्नात्वा दृष्ट्वेशं मल्लिकार्जुनम् ॥ ४७३
पवासत्रयं कृत्वा शिवरात्रिमविन्दत । चतुर्थमुपवासं च चकारातीव दुःखितः ॥ ४७४
रणं चाप्यमायां स कृतवान्फलवल्कलैः । अथ प्रदक्षिणं चक्रे श्रीशैलस्य च स द्विजः ॥ ४७५
तवान्मन्दिरं पश्चाच्चिन्तयाऽतिकृशः श्वसन् । कथं पापनिवृत्तिर्मे तूष्णींभूतस्य सेत्स्यति ॥ ४७६
नन्तमविचार्यं किं मत्पापं सुमहत्तरम् । श्रुत्वा न कोऽपि मे ब्रूयात्प्रायश्चित्तं विधीयताम् ॥
 तु कस्मिन्पुराणे तु श्रुते ज्ञातं भविष्यति । इति कृत्वा मतिं सोऽथ पुराणज्ञमभाषत ॥ ४७८
राणमेकं मे तात व्याख्यातु भगवानिति । जातकर्मादिसंस्कारान्कारयस्व ममाऽऽशु वै ॥ ४७९
द्विजो भूत्वा शृणोम्यद्य प्रायश्चित्तं करोम्यतः । विधाय किं पुराणं मे भविष्यति चिकीर्षितम् ॥
अतः शक्यं करिष्यामि पुराणार्थं विनिश्चयन् ॥ ४८०

पौराणिक उवाच—

यथा तत्कीर्तयिष्यामि पुराणं पापनाशनम् । यथाज्ञानं यथाशक्ति यथाशुद्धं यथाविधि ॥
किंवा रुचिपुराणं ते कीर्तयिष्ये तदेव तु ॥ ४८१

गौतम उवाच—

सर्वं रुचिपुराणं मे वक्तव्यं किं हितं वद । श्रुते यस्मिन्भिदा नैव जायते तु हरीशयोः ॥ ४८२

पौराणिक उवाच—

कौर्मोक्तं यत्पुराणं तदेवयोरभिदाभिधम् । शृणोति यस्तत्प्रथमं तस्य पापं विनश्यति ॥ ४८३
तस्य वक्ता तु यो विप्रस्तस्य विप्रान्तरं भवेत् । श्रोतव्यं मन्यते प्रायो यदि भार्या विनश्यति ४८४
किं चैकं दुष्करं वक्ष्ये श्रोतुर्वक्तुरनिन्दकम् । व्याख्यातरि यदि प्रीतिर्धर्मदेवप्रकाशिनी ॥ ४८५
आचारदर्शके पुण्ये कर्ममोक्षादिदर्शके । तदा तुष्टो महेशः स्याद्विष्णुरिष्टफलप्रदः ।
पितरस्तारितास्तेन यान्ति ते परमां गतिम् ॥ ४८६

इति श्रीमहापुराणे पाद्मे पातालखण्डे शिवराघवसंवादे दशाधिकशततमोऽध्यायः ॥ ११० ॥

आदितः श्लोकानां समष्ट्यङ्काः—१८९८०

---

अथैकादशाधिकशततमोऽध्यायः ।

---

श्रीराम उवाच—

कथं पातकसंघातसंकमे ब्राह्मणाधमे । पुराणज्ञः कथं व्याख्यां चकार द्विजसत्तम ॥ १

१ क ज्ञानं । २ क. ज. °रभिधाविधम् ।

शंभुरुवाच—

अध्यापने चाध्ययने जायते चाथ संगमः। संगतौ वत्सरं राम याति पातकिपातकम् ॥
पुराणज्ञे तु काकुत्स्थ सर्वतत्त्वार्थवेदिनि। अपि पातकसंदोहचीर्णपापं प्रणश्यति ॥
प्रभूतवह्निनाशो(शे) हि द्रुमराशिर्यथैव हि। शलभो दीपनाशाय वह्निनाशाय न प्रभुः ॥
कृत्तुं (तं ?) पापं तथाऽन्येषां नाशनाय *पुराणिकः। भूतादिग्रस्तमर्त्यानां भूतादिभयमोचक
समन्त्रवानपनयेद्यथा न स्वयमातुरः। पौराणिकस्तथा पापं न किंचित्प्राप्तुमर्हति ॥
आत्मना च कृतं पापमन्यैरपि च यत्कृतम्। पुराणज्ञो नाशयति त्वतिदुष्टं स्वकर्म वा ॥
भवानीशे हृषीकेशे समदृत्तिर्विवेकवान्। लोकवेदक्रियावेत्ता रुद्रजाप्यनतिस्पृहः ॥
तुष्टः शान्तः क्रियादक्षः प्रभूतोद्योगकृद्वशी। यथैव ते पुराणज्ञो वसिष्ठो भगवानृषिः ॥
नियोगात्तव भूपाल ह्ययोध्यायामधिष्ठितः। अपालयद्ध्रुवं कृत्स्नां त्वां च रक्षः समापतत् ॥
स च शुक्रोपदेशेन राक्षसस्त्वामथाभ्यगात्। मृगासक्तं हनिष्यामि नान्यथाऽवसरास्त्विति ॥
अथ विप्रो विदित्वैतद्वसिष्ठस्त्वद्धितप्रियः। सुप्तं प्रमत्तं काकुत्स्थं रक्षो हन्ति न संशयः ॥
ब्रह्मावाप्तवरं तद्धि मया कार्यं निवारणम्। इति संचिन्त्य विप्रर्षिः सेनामादाय निर्गतः ॥
रक्षो हन्तुमशक्तस्तु मृत्युहीनं ततो मुनिः। स्वयं च राक्षसो भूत्वा वाक्यमाह महामुनिः ॥
किमर्थमागतोऽसीह वनं मुनिनिषेवितम्। स आह राजा रक्षोघ्नस्तमहं हन्तुमागतः ॥
मुनिरप्याह किं तेन जीवितेन मृतेन वा। भुक्त्वाऽऽमिषं मदीयं तु युद्धं कृत्वा जयं व्रज ॥

राक्षस उवाच—

कथं त्वं राक्षसो मह्यं भक्षणाय भविष्यसि। वसिष्ठोऽप्यथ मानुष्यमास्थाय वियति स्थितः
निष्ठीव्य मस्तके तस्य मुष्टिना तमताडयत्। ताडितो राक्षसस्तेन व्यद्रावयद्दाषिश्च तम् ॥
पलायमानावन्योन्यं जलधिं तु गतावुभौ। तत्रस्थेन ग्रहेणासौ गृहीतो राक्षसस्तदा ॥
मुनिः पुनरयोध्यायां पूर्ववत्समतिष्ठत ॥

+शंभुरुवाच—

तस्मात्स्वाभिमतं कुर्यात्पुराणज्ञो विमत्सरः। श्रवणस्य विधानं च कथयामि शुभं शृणु ॥
शुक्लपक्षे दिने शुद्धे वारनक्षत्रयोगतः। करणे चापि लग्ने च ग्रहताराबलान्विते ॥
अमूढे न ग्रहे बाले न च वृद्धौ गुरौ स्थिते। न कृष्णपक्षे ग्रहणे न च नास्तिकसंनिधौ ॥
पूर्वोक्तलक्षणोपेतं पुराणं शृणुयादिति। शुद्धगेहेऽथवा शुद्धवेदिकायां मठेऽथवा ॥
नदीतीरे देवगृहे सभामण्डप एव च। रथ्यामठेऽथवा रम्ये पुण्यशालासु राघव ॥
स्वयं नमस्य विप्रेन्द्रान्पुराणज्ञं विशेषतः। आसनं कल्पितं कुर्याद्दृढं सर्वविशेषितम् ॥
एहि धर्मासनमिति वक्तव्यं स्यादनिष्ठुरम्। पुराणप्रक्रमाद्दिने यत्कार्यं तदुदीरये ॥
व्याख्यातारं पुराणस्य वस्त्राद्यैः परिपूज्य च। शुभानि दत्त्वा वस्त्राणि सूक्ष्माणि च नवानि
करकण्ठविभूषादि पात्रमासनमेव च। गन्धपुष्पाक्षतैः पूज्य ताम्बूलं विनिवेद्य च ॥
शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम्। प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥
सभासदश्च संपूज्य गणेशं प्रार्थयेत्ततः। ॐ नम इत्यादिमन्त्रेण पूजनं भारतीनुतिः ॥

* संज्ञापूर्वकत्वेनानित्यत्वान्न वृद्धिः। + इदमधिकमिति भाति।

१ अ. पुराणकः। २ झ. शुक्रोप°। ३ झ. हरिष्या°। ४ ट. प°ण पठनं भारतीमुनिः। प्रा°।

तःकाले पुराणस्य प्रक्रमं प्रारभेदिति । उपक्रमदिने राम त्रिपञ्चदश वा शुभाः ॥ ३२
का द्वितीये दिवसे ततो द्विगुणतः शुभाः । तृतीयदिवसे राम ततश्चाधिकमिष्यते ॥ ३३
नानामव्यवच्छेदाद्व्याख्यानं श्रवणं तथा । व्यवस्थितिर्यदा जाता तदा पौराणिकं गुरुम् ॥ ३४
म्बूलादि प्रदायाथ परेद्युः शृणुयादपि । पुराणमेवं श्रोतव्यं दैनंदिनमिति श्रुतिः ॥ ३५
रूपेण यः कश्चित्पुराणं शृणुयान्नरः । येदैवं तत्पुराणं तु तत्र याति न संशयः ॥ ३६
राणं श्रोतुकामेन श्लोकश्चैकोऽपि चेच्छ्रुतः । तद्दिने तु कृतं पापं नाशयेत्तु न संशयः ॥ ३७

एवं पुराणं शृणुयाच्च यस्तु स ब्रह्महत्याकृतपापबन्धात् ।
सुरापीतिः स्वर्णहरश्च राम गुर्वङ्गनागश्च विमुक्तिमेति ॥ ३८
पापानि चान्यानि कृतानि पुंभिः सर्वाणि नश्यन्ति पुराकृतानि ।
इहापि यान्यब्दशतार्जितानि श्रोतुर्विनश्यन्ति तथा च वक्तुः ॥ ३९

लौ समस्तविप्राणां सर्वज्ञत्वं न विद्यते । विगुणाऽपि ततो व्याख्या फलदा दानकर्मवत् ॥ ४०
राणानामभिप्रायं व्यासो वेद न चापरः । अहं वेद्मि विशेषेण व्यासादपि विधेरपि ॥ ४१
स्वाध्यायस्तपो वाऽपि न मन्त्रो न जुहोतयः । फलन्ति न तथा तिष्ये पुराणश्रवणं यथा ॥ ४२
कैकश्रवणादेव पातकं महदेव तु । नाशमाप्नोत्यसंदेहः श्रीशैलवर्तनादिव ॥ ४३
तो गुरुः पुराणज्ञः श्रोतृवन्द्योऽघनाशनः । न तस्मादधिकः कश्चिद्गुरुरस्ति गतिप्रदः ॥ ४४
न्त्रेषु गुरवो ये च वेदशास्त्रेषु ये मताः । नेशते सर्वविज्ञानं दातुं तस्माच्च बोधकाः ॥ ४५
पिशाचाः प्रायशो राम ब्रह्मराक्षसनामिनः । वेदमन्त्रस्य वेत्तारो दृश्यन्ते न पुराणवित् ॥ ४६
पुराणविमुखो नैव सर्वः सर्वं हि पश्यति । पुराणज्ञो हि तत्तस्मात्पापनाशकरः प्रभुः ॥ ४७
तत्पूजा सर्वपूजा स्यात्सर्वद्रोहोऽस्य पीडनम् । यथा समस्तदानानां विद्यादानं प्रशस्यते ॥ ४८
पौराणिकस्तथा राम तत्र दानं महत्फलम् ॥ ४९

श्रीराम उवाच—

किं वा पौराणिके देयं कियत्कीदृशमेव च । पुराणं कीदृशं वर्ज्यं वर्ज्यः कीदृक्पुराणवित् ॥ ५०

श्रीशंभुरुवाच—

षड्रसान्नपानानि स्नेहद्रव्याणि यानि च । गृहं सोपस्करं राम पुराणज्ञाय दापयेत् ॥ ५१
पर्याप्तान्येव सर्वाणि त्वधिकानि फलाप्तिकान्(कम्) ॥ ५२
धाद्द्रव्यमतो भूयः सचैलं शोभितं मृदु । भूषणानि यथार्हाणि स्वशक्त्या प्रतिपादयेत् ॥ ५३
न्धपुष्पं प्रतिदिनं केवलं गन्धमेव वा । केवलं वा तथा पुष्पं फलकाले फलान्यपि ॥ ५४
म्बूलं च तथा दद्यान्नमस्कुर्याच्च भक्तितः । पुराणस्य समाप्तौ तु दद्याद्दानादिकं तथा ॥ ५५
धिकं तु तथा देयं भूहिरण्यादिकं नृप । न च तूष्णीमुपक्रम्य श्रोतुमर्हति कश्चन ॥ ५६
ासद्भिः कृता चैव या पूजैकेन वा कृता । देवस्थाने यथाशक्ति सर्वैः पूजनमिष्यते ॥ ५७
ऽपि च यथा राम पुण्येष्वायतनेषु च । स्वशक्त्या पूजनं कुर्यात्पुराणज्ञाय राघव ॥ ५८
रुस्तु लक्षणं पूर्वं मयोक्तं भवते नृप । पौराणिकस्य सर्वस्य लक्षणं कथयामि ते ॥ ५९
हीनो महाव्याधिर्महापापी तिरस्कृतः । शौचाचारविहीनश्च वेदस्मृतिविवर्जितः ॥ ६०
यदेवः पूतिवचो व्यङ्गश्चाप्यधिकाङ्गवान् । परभार्यापतिः स्तेनः प्राणिहन्ता निराकृतिः ॥ ६१

१ म. प्रकृतं । २ ङ. यद्वैवं । ३ ट. प. शून्यदेवः ।

अथ वर्ज्यः पुराणं ते कथयामि नृपोत्तम । पूर्वैश्चैरुच्यमानं च मत्प्रोक्तं मुनिभिः परैः ॥
व्यासादयो मुनिवरा यत्प्रोचुस्तदुदीरयेत् । पुराणस्थं पठेद्ग्रन्थं व्याख्यास्येच्च(?)विचारयन्।
यया कयाऽपि वा राम भाषया देशभेदतः । न देशभाषारचितं ग्रन्थं श्रुत्वा फलं लभेत् ॥
व्याख्या या काऽपि काकुत्स्थ पुराणस्य हिता हि सा। तस्मात्त्वं देव याचस्व व्याख्यास्ये यत्पुराण

*शंभुरुवाच—

एवं पौराणिकेनोक्तं श्रुतवानपि गौतमः । [†स्वयं वस्त्रत्रयं प्रादाद्ब्राह्मणाय महात्मने ॥
कौर्मं पुराणं प्रथमं श्रुतवानिति नः श्रुतम् । दत्तवान्स्वर्णमधिकं वस्त्राणि च शुभानि च ॥
अथ लैङ्गं च शुश्राव वैष्णवं वामनं तथा । पाद्मं च गारुडं चैव सौरं ब्राह्ममथैव च ॥
एवमष्ट स शुश्राव पुराणानि स गौतमः । ] अथ रामायणं चैव कौर्ममेव पुनश्च सः ॥
शिव नारायणेत्येवं जपं चक्रे सदैव हि । अवाप निधनं चापि स गतो ब्रह्मणः पदम् ॥
ब्रह्मा(ह्म) संपूजितं(तो) विप्रं(प्रो) विष्णुलोकमथागमत् । विष्णुना पूजितः सोऽथ जगाम
मन्दिरम्+ ॥
सर्वेषामेव वन्द्योऽसौ गौतमो मुनिसत्तमः । भारतश्रवणे चापि नियमा ये मयेरिताः ॥
पुरा व्यासेन मुनिना त्रिवर्षाद्यत्कृतं शुभम् । श्रवणात्तस्य कृत्स्नस्य व्याकर्ता भारतस्य यः
न किंचित्प्रणमेद्विप्रं मुक्त्वा योगिनमुत्तमम् । सर्वेषामेव वन्द्योऽसौ भारतं व्याकरोति यः ।
यो महाभारतं नित्यं व्याख्यास्यति पठेच्च वा । स सर्वेभ्योऽधिको विप्रस्तारयेच्चैव मानवा
व्याकरोति च पर्वैकं सर्वाणि कतिचित्तु वा । सर्वपापविनिर्मुक्तो हव्ये कव्ये विशिष्यते ॥
तमेव प्रणमेद्विप्रं तमेवार्हं च पूजयेत् । तमेव भोजयेन्नित्यं सर्वं तस्मै निवेदयेत् ॥
तस्य पूजाविधिः प्रोक्तो व्याख्यानसमये द्विज । प्रतिपूज्योऽथ वस्त्राद्यैः पूजयेद्विधिमार्गतः।
आदिपर्वसमाप्तौ तु सूक्ष्मवस्त्रत्रयं ददेत् । सुवर्णं च यथाशक्ति सभापर्वणि वाससी ॥
अनुशासनिकारण्यस्वर्गारोहेषु पर्वसु । आदिपर्वणि या पूजा सा पूजा नृपपुंगव ॥
कर्णाश्वमेधवैराटशल्यद्रोणेषु पर्वसु । सूक्ष्मवस्त्रत्रयं शुद्धं निष्कद्वयमथापि वा ॥
क्षुद्रपर्वस्वथान्येषु निष्कावथ समानयेत् । हरिवंशे सनिष्कं तु वस्त्रत्रितयमेव तु ॥
भारतस्याखिलस्यैव समाप्तौ क्षेत्रदो भवेत् । रामायणस्य श्रवणे काण्डे काण्डे प्रपूजयेत् ॥
क्षेत्रं पर्याप्तमथवा सुवर्णमपि दापयेत् । व्याख्याता गुरुवाक्यस्य सर्वकल्मषनाशनः ॥
अर्थो धर्मश्च कामश्च मोक्षश्च नृपसत्तम । व्याख्याश्रवणतः सर्वे सिध्यन्ति च सुबुद्धयः ॥
ब्रह्महत्यादिपापानां सर्वेषामपि नाशनम् । एकेन श्रवणेनास्य किं नरैर्न श्रुतं भुवि ॥
यानवस्त्रसुवर्णाद्यैर्नित्यमेनं प्रपूजयेत् । व्याख्यातारं यतः पापसंदोहस्य विनाशनम् ॥
अन्यान्यपि पुराणानि मुनिप्रोक्तानि तान्यपि । श्रोतॄणां पापनाशाय वक्तुश्चापि विशेषतः ।
यश्च सर्वपुराणानि षड्विंशत्तु (?)प्रकीर्तयेत् । शृणोति वा न तस्यास्ति विघ्नच्छेदः कदाचन
ब्राह्मं पुराणं प्रथमं द्वितीयं पाद्ममुच्यते । तृतीयं वैष्णवं चैव चतुर्थं शैवमुच्यते ॥
अथ भागवतं प्रोक्तं पञ्चमं षष्ठमुच्यते । भविष्यं नारदीयं च सप्तमं परिकीर्तितम् ॥

* इदमधिकमिति भाति । † धनुश्चिह्नान्तर्गतः पाठः ख. ङ. च. छ. ट. ड. प. पुस्तकस्थः । + इतः परं शंभोः कथां श्रुत्वा राघवस्तोषमाप्तवान् । श्रीशंभुरुवाच' । इत्यधिकं ट. प. पुस्तकयोः ।

१ ट. प. मुनिपुंगव । २ ट. प मुनिसत्तम ।

र्कण्डेयमिति प्रोक्तमष्टमं नवमं तथा । आग्नेयं ब्रह्मवैवर्तं दशमं परिकीर्तितम् ॥ ९२
च वामनं चैव स्कान्दं मात्स्यमथैव च । कौर्मं वाराहमुदितं गारुडं चाथ कीर्तितम् ॥ ९३
ाण्डमित्यष्टादश पुराणानि विदुर्बुधाः । तथा चोपपुराणानि कथयिष्याम्यतः परम् ॥ ९४
यं सनत्कुमाराख्यं नारसिंहमतः परम् । [*तृतीयमाण्डमुद्दिष्टं दूर्वाससमथैव च ॥ ९५
रदीयमथान्यं च(न्यच्च) कापिलं मानवं तथा । तद्वदौशनसप्रोक्तं ब्रह्माण्डं च तथाऽपरम् ]९६
रुणं कालिकाह्वानं माहेशं साम्बमेव च । सौरं पाराशरं चैव मारीचं भार्गवाह्वयम् ॥ ९७
मारं च पुराणानि कीर्तितान्यष्ट वै दश । अष्टादशपुराणानां व्याकर्ता तु भवेन्मनुः ॥ ९८

ति श्रीमहापुराणे पाद्मे पातालखण्डे शिवराघवसंवादे पुराणमाहात्म्यकथनं नामैकादशाधिकशततमोऽध्यायः ॥ १११ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१९०७८

अथ द्वादशाधिकशततमोऽध्यायः ।

सूत उवाच—

संध्यावन्दनकर्म क्रियतामिति रामो मुनिमाचष्टायम् ।
उष्णद्युतिरप्यस्तमुपैति द्विजकुलमेतन्नीडमुपैति ॥ १
स्वयमपि संध्यावन्दनकामोऽव्रजदुत्तरदिशमुज्झितयानः ।
हाहाहूहूकृतसंगीतिर्बन्दीप्रमुखप्रस्तुतकीर्तिः ॥ २
गौतमीतटमुपेत्य राघवो वायुनन्दनसुधौतपद्युगः ।
जाम्बवत्कृतकरावलम्बनः प्राप्लुतपथनदीं तु गौतमीम् ।
करद्वये धृतकुशः स राघवः प्रागमद्वरुणदिशामथोत्तमाम् ॥ ३
दत्त्वा ततोऽर्घत्रितयं तथाविधः प्रहृष्टरोमाऽथ जजाप सोऽन्तरे ।
+संप्रार्थयित्वा वरुणं यथाक्रमं शंभुं वसिष्ठं प्रणनाम राघवः ॥ ४
ताभ्यां कृताशीरगमन्मनःपदं हनूमता क्षालितपादपङ्कजः ।
जुहाव वह्नीनथ बन्दिमागधैः संस्तूयमानोऽथ च निर्ययौ बहिः ॥ ५
सचन्द्रकिरणैः सुधालिप्तमिवाम्बरम् । प्रसक्तताराकुसुमं वितानमिव सर्वतः ॥ ६
ागच्छत्सौधतलं वृद्धामात्येन कल्पितम् । नानासनसमोपेतं सभास्थानं ययौ नृपः ॥ ७
अथ मुनिं समुपवेश्य स राघवः स्वयमपि प्रथमासनमाभजत् ।
कपिगणाः परितः पृथुविग्रहा रचनया स्थितिमाप्रतिपेदिरे ॥ ८
सुखस्थितं नृपमभिवीक्ष्य स द्विजो वचस्तदा समुचितमाह शंभुः ।
इहस्थितो भवति समस्तपूजितः कथं कथा नृपवर वर्तते गुहायाम् ॥ ९
आकर्ण्याथ रघूद्वहो द्विजवचः शुश्रूषुरासीत्कथां
तत्रस्थो निपुणं निवार्य वचनं सर्वैः श्रुतं तत्क्षणात् ॥
शुश्रावाथ कथां महाद्भुततया स्वात्माश्रयामन्यथा

* धनुश्चिह्नान्तर्गतः पाठः, ड. प. पुस्तकस्थः । + ल्यबभाव आर्षः ।

१ ट. प. श्रीराम ।

रक्षोबाधनवादिनीमथ नृपः किं त्वेतदित्याह च ॥
कुम्भश्रोत्रवधः पुरा समजनि प्राप्तो दशास्यो वधं
पश्चादित्ययमन्यथा विरचित रामायणं भाषते ॥
कोऽयं विप्रवरः समस्तजनतानास्तित्वसंपादको
राज्ञां स्थानमुपेत्य वक्ति स मया दण्ड्योऽथ पूज्योऽथ वा ॥
अथाऽऽह जाम्बवानमुं रघूत्तमं कथां प्रति
रामायणं न तावकं त्विदं हि कल्पितं मतम् ॥
समस्तमत्र विस्तराद्वदामि देव तच्छृणु
पङ्केरुहस्य सूनुतो मया श्रुतं पुरा ह्यभूत् ॥

जाम्बवन्तं विज्ञाप्य रामचन्द्रो वचनमाह ।

श्रीराम उवाच—

कीर्तय पुराणं मे शुश्रूषुः कुतूहलादहं प्रणीतं तत्केन च विज्ञातम् ॥

जाम्बवानथ बभाषे हि ॥

विधात्रे नमस्तथैव विधुभूषणकेशवाभ्याम् ॥

अथ पुरातनरामायणं कथयामि यस्य श्रवणेनाखिलजन्मसंपादितपापक्षयो जायते ॥

अथ तथाऽपि दशरथो दशरथसमानरथी महीयसा बलेन सुमनसं नाम नगरं जिगमि पङ्केरुहसुतसुतं वसिष्ठमाहूय नमस्कृत्वा मुनिदत्तानुज्ञः शताक्षौहिणीसेनया सहाऽऽरुह्य तु मुख्यं चन्द्रसमानशरीरमि(म)तिरोषसमाविष्टो विप्रश्रवसमाराध्य दण्डयात्रां चकार ॥

साध्यो नाम स्वीयया सेनया वृतो दशरथाभिमुखमाययौ योद्धुं युद्धं चान्योन्यमभूत् ॥

मासमेकं युद्धं कृत्वा दशरथस्तं साध्यं जग्राह ॥

अथ साध्यसूनुर्भूषणो नामाल्पपरिवारो युयुधे दशरथेन ॥

दशरथोऽपि साध्यसूनुं भुवो भूषणमवलोक्य योद्धुमेव नैच्छत् ॥

कथमेतादृशं हन्मि चास्मिन्हतेऽस्य कथं पिता भविष्यति कथं तन्माता कथमप्रौढयौवना भि भार्याऽमुष्य हि देहे समालिङ्गनचुम्बनपरिवर्तिनवीनतरदलारविन्दपदानि कुसुमानीव दृश्यन्ते

एतत्समानवर्णवया एतादृशसुभगः परमप्रीतिवर्धनो नाम पुत्रो भल्लूकभक्षितो मृतः स्मृति प्राप्यापि मां रक्षयितुमिच्छतीव मम हृदयमन्यथा करोतीति मनसा वितर्क्यातिबालकं ग्रहीतु रभत ॥

स च साध्योऽपि पराधीनो बभूव ॥

स च कुमारेण सह पराजयखेदममत्वा सुखमध्युवास च ॥

स दशरथोऽपि तत्र मासं स्थित्वा तत्पुत्रसंदर्शनसुखमवलोक्याचिन्तयत् ॥

अहो सर्वदुःखापनोदनक्षममेतन्मुखावलोकनं पुत्रसंवर्धनं नाम ॥

सर्वराष्ट्रिकोऽपि मम जयः पुत्रवियोगमनुस्मरतो दुःखाय केवलं भवति तदस्य पृच्छां करे कथमीदृशो जायते पुत्र इति वितर्क्य तमपृच्छत् ॥

साध्योऽपि सकलमोक्षमार्गं क्षितीशायाऽऽदिशत् ॥

---

१ क. °ति न राम तावकं त्विदं कदाऽपि कल्पितं मतं ।

हरीशानौ सहाऽऽराध्य सर्वैकादशीरुपोष्य द्वादशीषु ब्राह्मणानाराध्य तत्कालभवं फलपु-
ाद्यं व्यञ्जनं पुष्पं वा न्यायेन संपाद्य कपिलाघृतेन केशवं स्नापयित्वा मुद्गचूर्णेन संलिप्य
दुकेन स्नापयित्वा सुरभिपटीरं स्वयमुद्घृष्टं मृगनाभ्याऽगरुसारेण वा समेतं देवाङ्गे सर्व-
लिप्य तुलसीदलैर्यूथिकाकरवीरनीलोत्पलकमलकोकनदद्रोणकुसुममरुबकदमनकगिरिकर्णिका-
कीदलपूर्वैर्यथासंभवमभ्यर्च्य द्वादशाक्षरेण पुरुषसूक्तेन वा नाम्ना वा षोडशोपचारेण वाऽऽ-
य प्रणम्य नृत्यं कृत्वा देवं क्षमापयेत् ॥ १९
ा व्रतानि च विचित्राणि नारायणप्रीणनाय कुर्यात् ॥ २०
न्नो भगवान्मुनिरीप्सितं पुत्रं यच्छति तदमुमाराधयस्वेति दशरथमुक्तवान् ॥ २१
स चापि साध्यं ततः स्थाप्य गत्वाऽयोध्यां तथा सर्वं कृतवान् ॥ २२
अथ पुत्रकामेष्टौ समाप्तायामाहवनीयाद्यज्ञो मूर्तिमान्भूतः शङ्खचक्रगदापाणिरुदतिष्ठत् ॥ २३
राजानं वरं वृणीष्वेत्युक्तवान् ॥ २४
स च राजा वव्रे पुत्रानतिधार्मिकान्दीर्घायुषश्चतुरो लोकोपकारकान्देहीति ॥ २५
अथ राजमहिष्यश्चतस्रः कौशल्या सुमित्रा सुरूपा सुवेषा चेति राजानमब्रुवन्देव प्रतियोषमे-
त पुत्रेण भवितव्यम् ॥ २६

अथ कौशल्योवाच—

एष यदि प्रसन्नो देवस्तदयमुत्पद्यतां मम ॥ २७

राजोवाच—

मम दिष्टं तदयं प्रार्थ्यते हरिः ॥ २८
विष्णो प्रसीद देवेश कमलापते शङ्खचक्रगदाधर विभीषणसृष्टिसमस्तलोकपालादिपूजितपाद-
ुल शाश्वत हरे नमस्ते नमस्त एवं स्तुतो भगवानथ राजानमाह ॥ २९

माधव उवाच—

तव पुत्रो भविष्यामि कौशल्यायामथ चरुं प्रविवेश हरिस्तं चरुं हि चतुर्धा विभज्य भार्याभ्यो
तवान् ॥ ३०
अथ कौशल्यायां रामो लक्ष्मणः सुमित्रायां सुरूपायां भरतः सुवेषायां शत्रुघ्नो जज्ञे ॥ ३१
खात्पुष्पवृष्टिश्च पपात ॥ ३२
चतुराननः स्वयमुपेत्य जातकर्मादिकाः क्रियाश्चक्रे ॥ ३३
त्रिभुवनाभिरामत [*या राम इति नाम चक्रे रूपशौर्यादिलक्ष्मीयोग्यतया लक्ष्मण इत्यपरस्य
भारात्तारयतीति भरतः] शत्रून्हन्तीति शत्रुघ्न इति नामानि कृत्वा ब्रह्मा स्वभवनं जगाम
वश्च वृद्धिमेव ॥ ३४
अथ पादसंचारिणं बालचन्द्रसंकाशदर्शं बिम्बाधरमुन्नततिलप्रसूननासं पुरश्चूलिकालम्बमान-
पत्रकं श्रवणलोल[+लम्बमानकुण्डलं वक्षस्थलविलुलितस्थूलमुक्ताहारं विलसत्कार्तस्वरबाहुव-

* धनुश्चिह्नान्तर्गतः पाठः, ख. ङ. च. छ. ट.ड. प. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः ख. ङ. च. छ. ट. पुस्तकस्थः ।

लयं सिञ्जन्मणिकङ्कणरत्नाङ्गुलीय]हेममणिरचितश्रोणीसूत्रं सिञ्जन्नूपुरोपशोभितपादमङ्गुली
शोभितपादमध्याङ्गुलिकं वज्राङ्कुशसरोजलाञ्छनशोभितोरुपादतलं तूणीरसदृशजङ्घं करि
दृशोरुं विस्तृतजघनं सूक्ष्ममध्यं वर्तुलावर्तकं गम्भीरनाभिमिन्द्रनीलशिलाविशालवक्षःस्थलं
ग्रीवं चन्द्रबिम्बसदृशवदनमर्धचन्द्रसदृशललाटं नीलकुटिलकुन्तलं क्रीडासक्तं धूलिभिराप
फुल्लपद्मदलारक्तविलोललोचनं महेश्वरमिवोद्धूलितभूतिं महेश्वरमिव दिगम्बरं रामं कुमारं
दशरथो दृष्ट्वा हर्षपरिपूर्णहृदयः पुत्रमालिङ्ग्य चुम्बित्वा वक्षस्यालिलिङ्ग दृढम् ॥

अथ कुमारोऽपि पार्श्वेनाङ्कमारोप्य कलकलितलोचनो यत्किंचिदुवाच याचमानमित
वीक्षमाणस्तात गच्छे शये तात क्रीडामि तातेत्यादि पुत्रसुखमनुभूयानुभूय निर्वृतिं ययौ

अथ कदाचिद्दोलकुमागते राजनि रामचन्द्रो बालक्रीडासक्तहृदयो बहुक्रीडनककरकमल उ
धावमानो नरपतिपुरःस्थितमणिखचितसुवर्णभाजनस्थमन्नं वामकरेण गृहीत्वा राजनि चिक्षे

इदमपि राजा सुखाय मेन एतादृशान्यन्यानि चकार रामचन्द्रः ॥

अथ कदाचित्क्रीडमाने रामे वात्या राममपातयद्रामश्च रुदन्नपतत् ॥

एतस्मिन्नन्तरे ब्रह्मराक्षसो राममगृह्णाद्रामश्च मूर्छामाप ह ॥

अथ सहचरो बाल इतस्ततो रोरूयमाणो रामं तथाविधं राज्ञे व्यज्ञापयत् ॥

अथ राजा राममादाय वसिष्ठमाह—

किमिदं रामस्येति पप्रच्छ ॥

अथ वसिष्ठो भस्माऽऽदायाभिमन्त्र्य ब्रह्मराक्षसं मोचयामास पप्रच्छ को भवानिति ॥

स चाऽऽहाहं वेदगर्वितो ब्राह्मणो बहुशः परधनमपहृत्य ब्रह्मराक्षसो जातो मे निष्कृतिं
रय ॥

वसिष्ठ उवाच—

इदमितःपरमेकवर्षशतोपभोग्यं राक्षसत्वं नरकं भागीरथीस्नानमेकं शिवाय बिल्वपत्रशतं
ततः स्नात्वा पापाद्विमुक्तो भवसीति ॥

कदाचित्तादृशं कृतपुण्यं तव पदं प्रयच्छामि तदुपरि शिष्टगतिं भजेति वसिष्ठवाक्यम
ब्रह्मराक्षसो वसिष्ठोपदिष्टपुण्यवशाद्दिव्यशरीरो भूत्वा नमस्कृत्वा स्वर्गं जगाम ॥

अथ रामं प्राप्ते काल उपनीय वसिष्ठो वेदानध्यापयामास षडङ्गानि मीमांसाद्वयं नीरि
चाध्यापयामास ॥

अथ धनुर्वेदमायुर्वेदं भरतगान्धर्ववास्तुशाकुनविविधयुद्धशास्त्राणि च ॥

अथ विवाहं कर्तुकामेन राज्ञा दशरथेन नानादेशजनपतीन्प्रति दूताः प्रेरिताः ॥

अथ कश्चिच्छीघ्रमागत्य राजानमिदमब्रवीद्राजन्विदर्भदेशाधिपतिर्विदेहो नाम राजा
पुत्री वैदेही होमलब्धा रूपेण लक्ष्मीसमा सर्वलक्षणसंपन्ना रामयोग्या विद्यते स च त
राजा रामायोद्युक्तस्तद्रम्यतां शीघ्रमिति ॥

अथ वसिष्ठादीन्प्रेषयामास ते च तत्र गत्वा तां च निरीक्ष्य लग्नं निश्चित्यायोध्यायामे
जानमुक्त्वा रामसहिताः पृथ्वीपतिसमेताः शीघ्रं विविधकरितुरगरथकटशिबिकान्दोलिका
सुभगरूपभोगविलासक्रियानिपुणा हि(?) विदितविविधचेष्टा गन्धर्वकामशास्त्रकुशला मृ
नपृथुपयोधरासक्तकण्ठाः स्थूलसूक्ष्मकलाटबिम्बदशनच्छदमुखपङ्कजाः कुटिलकुन्तलदीर्घ

ाः कनकपत्रकर्णाः स्नानचेष्टयोत्थितरोमशोभिता जपारक्तदशना विस्रदविस्फुरच्छफरीलो-
ः शुक्तिकासदृशश्रवणा नक्षत्रसदृशस्थूलमुक्ताफलोपशोभितनासापुटा मुकुरसदृशकपोलाश्लिष्ट-
नासिका आननमध्यप्रदेशचूचुका इन्द्रगोपप्रतीकाशाधरपुटदशनक्षताः समदीर्घकाङ्गप्रदर्शना-
तसर्वप्रदेशवर्तुलानतिमांसलाः पिण्डकाग्रन्थिनीभ्यो वलितबाहुमूला अनतिचिरकालोत्थितरो-
ाहरिद्रावर्णतया च कर्णिकारदलसदृशबाहुमूला मृदुस्निग्धवर्तुलसूक्ष्ममध्यप्रदेशाः कठिनस्थू-
र्तुलाग्रचूचुकपरस्परस्थानाक्रमणस्पर्धिपयोधरमध्यलब्धपदकपयोधरोपरिचञ्चलविविधमणिप्र-
रोपशोभितवक्षस्थलाः पयोधरपरितो लब्धपदतया तरुणदृष्टि[*परस्प(रंप)रयाऽसमानया
भिकूपोपरित(न)रोमराज्योपशोभितोदरप्रदेशा भज्यमानमध्यस्थलीकरण इव वली]त्रयोपशो-
ता मुष्टिग्राह्यमध्याः करिकरोपमजघनप्रदेशा आरोमशमृदुस्निग्धा [†मलासमजान्व्यः कदली-
भसंनिभोरुयुगुला आमग्नजानुकृशकुंश(?)वर्तुलपिण्डिकारहितजङ्घा आमग्नगुल्फा आसूक्ष्म-
ग्धा]दीर्घदीर्घाङ्गुलिपादा नूपुररवाह(हू)यमानमदना हंसमतंगजगमना दक्षिणाङ्गुष्ठस्पर्शिक-
ाग्रा उपरिकच्छं नीविं कृत्वा करद्वययुता वक्षप्रदेशकण्ठप्रप्रावृत्यापरवसनपरिभागा हृत्तस्त-
सनापरभागे वामांस एव दक्षिणपार्श्वागतेन दशाभागेन नाभिप्रान्तेन मनोज्ञिनोपशोभितगा-
ष्ट्यो योषितो विवाहमङ्गलकर्मकरणायानेकश आगच्छन् ॥ ५१
बालिकाश्च विद्युल्लतांशुशोभितगात्रयष्ट्य उद्भिन्नकुचकमलकुड्मलविविधहारोपशोभितवक्षसो
किंचिद्भाषिण्योऽतिचपलमृदुगतयो वृद्धवनिताश्चाऽऽगच्छन् ॥ ५२
अथ विदेहपुरतः क्रोशमात्रे चूतवनिकायां विविधविटपविस्तारप्रदेशविविध[+विहङ्गकूजिताकर्ण-
त्तकर्णवनहरिणशाववत्यां महारजतनिर्मितोच्चनीचप्रासादोपशोभितप्रदेशविविध]विहङ्गायां
वल्कलसंवीतभसितोद्धूलितशरीरजटिलमुनिगणध्यानोपासनोपशोभितवृक्षमालायां विविधवि-
धरवधूपयोधरभाराभिभूतविचरिततरङ्गसरसीयुतायां सरस्तीरमिलितसैरन्ध्रीयुवतिभिराहूयमा-
रुणजनायां नानावर्णकुसुमसौरभवासिताशेषप्रदेशायामितस्ततो रिरंसया प्रदर्शितस्फारशफरी-
लोचनतरलचक्षुषा प्रभाविलसितशरीरवेश्याजनायां विविधाश्चर्ययुतायां दशरथः सामात्यपुरो-
ताभिरामरामादिपुत्रसहितः सुखमुवास ॥ ५३
अथ वैदेहोऽपि मिथिलां नानापताकोपशोभितां विविधप्रासादगोपुरां देवतायतनोपशोभिता-
ोन्यकेलिचतुरयुवतिजनानुकीर्णामुशीरविरचितमहाप्रपां सुकेलिजनोपशोभितविशिखां विवि-
योपशोभितरथ्यां तत्र ब्रह्मघोषशोभितमठां प्रतिमन्दिरं मीमांसादिव्याख्यानसंपादसी-
यनां सुपुण्यहविर्गन्धसामादिस्वरपदक्रमश्रुतिब्राह्मणवाटिकामनेकपरिवृढमन्दिरप्रवेशनिष्क्री-
कुसुमापध्वर्युवेषां मृदुलवसनताम्बूलरक्तदन्तच्छदकामिनीं मृदुवचनकठिनवचनकरसंज्ञानि-
ा)रितप्रतिवचनविविधोपायनाहरणकरजनोपशोभितां मृदुधवलजघनपरिवीतवक्षोपरिभागेन
वर्तुलपरस्परसंघर्षपयोधरमध्यप्रदेशोपशोभितवामांसकण्ठोपशोभितवनितां विविधमुक्ताहा-
संकाशदशनच्छदमन्दहासमालाकारसहस्रोपशोभितां पुण्यासवसाधनमन्दिरां तत्र तत्र

ुष्चिह्नान्तर्गतः पाठः ख. ङ. च. छ. ट ड. प. पुस्तकस्थः । †धनुश्चिह्नान्तर्गतः पाठः ख. छ ट. ड. प. पुस्तकस्थः ।
ह्नान्तर्गतः पाठः ख. ङ. च. छ. ञ. ट. ड. प. पुस्तकस्थः ।

१ ख. °रिहृ° ।

विचित्रतोरणां विशुद्धवीथिकां तत्र तत्र स्थापितकल्पपादपां रम्भाविभूषितद्वारां पुरीं शो
शोभयामास ॥

अथाभिकलनार्थं विलासिन्यो निशादूर्वाक्षतमग्रमङ्गलकज्जलितकैशिकधम्मिल्लते(?)लग्न तजटोपशोभितसीमन्तशीर्षशोभितनासापुखविचित्राभरणा हेमपात्रावस्थिताज्यगुग्गलुफलादि भाग्यद्रव्यमुद्वहन्तीभिः स्त्रीभिरन्यैरपि शोभितजनैः स राजा निर्जगाम ॥

तदानीं मङ्गलं(ल)तूर्यघोषा देवदुन्दुभिभेरीनिःसाणमर्दलशङ्खादिनादाः प्रादुर्बभूवुः ॥

गायकाश्च मङ्गलानि जगुः ॥

मङ्गलवेदवाक्यानुपाठेन वैदिका ब्राह्मणाः कुलपाठका भेरीघोषेण कृत्स्नमाकाशमपूरयन्

अथान्योन्याक्षताः पूर्वमङ्गीकुर्वन्तः सूतबन्दिजनादिभिः स्तूयमानाः पुरं प्रविविशुः ॥

विदेहनगरात्पश्चिमभागे निर्मितं मन्दिरं दशरथः प्रविवेश ॥

अवशिष्टाश्च यथायोग्यं विभवनं विविशुः ॥

अथ नारदो मिथिलां तदानीमेवागच्छत् ॥

विदेहोऽपि देवर्षिमभिपूज्य स्वागतं पृष्ट्वा भोजनं च कारयित्वा सुखासीनाय मुनये स सारताम्बूलं दत्त्वा व्यज्ञापयत् ॥

श्वो विवाहे भवानिह स्थातुमर्हति कारयते(तां) विवाहम् ॥

नारद उवाच--

श्वो हि नक्षत्रे सूर्यनक्षत्रदर्शनं तत्र विवाहो न कर्तव्य इति ॥

अथ मौहूर्तिकं वृद्धगार्ग्यमाहूय राजा पप्रच्छ क विवाहमुहूर्तः ।

श्व इति गार्ग्य उवाच ॥

राजा च नारदं गार्ग्यं चोदीक्ष्य भो इदमित्थमिति पप्रच्छ ॥

अथ नारदो गार्ग्यमुवाच कथमुक्तलग्नं दास्यसि ॥

अथ गार्ग्यो विषघटिकाश्च विहाय लग्नं दास्यामीत्युवाच ॥

नारदोऽपि ब्रह्मवचनानि किं न जानासीत्युक्तवान्गार्ग्यम् ॥

गार्ग्येण पृष्टस्तान्दोषानपठत् ॥

उल्का च ब्रह्मदण्डश्च मोघः कम्पस्तथैव च । सर्वकार्यविनाशाय दृष्टा वै ब्रह्मणा पुरा ॥
प्रतिष्ठासु विवाहेषु मौञ्जीबन्धाभिषेकतः । अन्येषु सर्वकार्येषु विषनाडीर्विवर्जयेत् ॥
अतः परं तु कार्याणां करणे न च दोषभाक् । विवाहादिषु कार्येषु दोषमेव वदाम्यतः ॥
उल्का दहेत्कुलं सर्वं ब्रह्मदण्डो विनाशयेत् । मोघस्तु मरणाय स्यात्कम्पः कम्पाय कर्मणः ।

इति नारदोक्तमाकर्ण्य गार्ग्यो मुनिर्मौनपरोऽभवत् ॥

दध्यौ रविं ग्रहपतिं विहाय विषनाडीर्विवाहः क्रियतामिति ॥

नारद उवाच—

कथं ब्रह्मवचनम् ॥

सूर्य उवाच—

देशभेदेन व्यवस्थोदिता तदस्मिन्देशे विवाहो विषघटिका विहाय कर्तव्य एव ॥
नारदोऽप्यनुमेने ॥

ाच श्वः परश्वे(राश्वे) च क्षत्रविवाहश्च भवेदतः स्वयंवरार्थं नृपा आगच्छन्तु तं भूप दूतान्प्रेषय ।
अथ राजा विदेहो दशरथानुमतेन सर्वानेव नृपानागमय्याचिन्तयत्कथं सर्वानेव तिरस्कृत्य
ही रामाय देयेति ॥ ७९
अथ रात्रौ मुहुर्मुहुर्निश्वस्य निद्रालुरपि न निद्रामाप ॥ ८०
अथ मध्येनिशं राजा शुचिर्भूत्वा त्र्यम्बकं साम्बिकं मङ्गलदुकूलधारिणा कमलभवपुरुषोत्त-
ाक्रमुखनिखिलदेवैर्भृगुप्रमुखमुनिवरैर्हाहाप्रमुखगन्धर्वैस्तुम्बुरुप्रमुखैश्च श्रुतिस्मृतीतिहासपुरा-
र्तिमद्भिश्च सिद्धविद्याधरादिमातृकागणैर्नन्दीप्रमुखगणैश्च सेव्यमानपादकमलं सर्वामङ्गलप-
ोचकमतिपुण्यसलिलया गङ्गया निष्कलङ्केन चन्द्रमसा सेव्यमानशिरोभागं वामाङ्कारूढया
ािरजया प्रदीयमानवीटिं सहासं सकामं सहावेक्षणमाददानं गोक्षीरसदृशं प्रतिकूलकस्तूरिका-
दृशकण्ठं मृदुसूक्ष्मस्निग्धजटाभिर्विरचितकपर्दं विशुद्धकार्तस्वरकुण्डलोपशोभितगण्डभागं द्विरष्ट-
र्षवयसं गोक्षीरसदृशस्थूलमुक्ताफलकौसुम्भवर्णाञ्चलेनाऽऽवेष्टितशिरोभागं विविधरत्नविरचित-
ार्तस्वरभूषितवक्षःस्थलमतिधवलोपवीतेनोपशोभितशरीरमम्बिकानुलिप्तकुङ्कुमारुणसुगन्धिशरमी-
माणं तर्ज्यमानमार्गणकोटिकंदर्पसदृशं मनसाऽचिन्तयत् ॥ ८१
जजाप शतरुद्रियं जुहाव च तेनैव कामाहुतिं प्रास्तुवच्च पुरुषसूक्तेन ॥ ८२
अथ तादृश एव महेश्वरस्तत्र प्रादुरभूत् ॥ ८३
अथ राजा नमस्कृत्यास्तुवीत ॥ ८४

राजोवाच—

क्षितिसलिलगगनपवनदहनरविशशियजमानमूर्तिभिरष्टमूर्ते विश्वमूर्ते लोकमूर्ते त्रिभुवनमूर्ते वेद-
ाणमूर्ते यज्ञमूर्ते स्तोत्रमूर्ते शास्त्रमूर्ते स्वधामूर्ते नारायणमूर्ते सर्वदेवतामूर्ते त्रयीमय त्रयीप्रमाण
ीनेत्र सामप्रिय वसुधाराप्रिय भक्तिप्रिय भक्तसुलभाभक्तविदूर स्तुतिप्रिय धूपप्रिय दीपप्रिय
क्षीरप्रिय द्रोणकरवीरप्रिय श्रीपत्रप्रिय कमलकह्लारप्रिय नन्द्यावर्तप्रिय बकुलप्रिय यूथिकाप्रिय
कनदप्रिय ग्रीष्मजलावासप्रिय यमनियमप्रिय नियतेन्द्रियप्रिय जपप्रिय श्राद्धप्रिय गानप्रिय
यत्रीप्रिय पञ्चब्रह्मप्रिय सदाचारप्रिय गोत्रोत्सादिकमलभवहरिहरनयनसमर्चितपादकमल
प्रद हरिप्रार्थितजलोत्पाटितचक्रप्रदर्शकृत्स्मृतियुक्तिप्रद स्मृतिमङ्गलप्रदं मह्यां जय नमस्ते
स्ते ॥ ८५
स्तोत्रमाकर्ण्य भगवान्भवो राजानमुवाच वरदोऽहं वरं वृणु ॥ ८६

राजोवाच—

म कन्या वैदेही रामाय दित्सिता स्वयंवरे कुलरूपबलोत्साहसंपन्नानेकभूपराक्षसविप्रादि-
ाणिसमागमे रामाधिकबलो यदि ताम्[†]ग्रहीष्यदा वचनमनृतं मम पापं च भविष्यति प्रत्युत
थोऽपि सर्वानेवाऽऽगतान्विजेतुमलं क्षत्रकदनश्च रामो यद्यायास्यति तर्हि मम सुतां किं
ष्यति वा किं किं वा प्रेषयिष्यति कीदृशं कारयिष्यति मम किंवा करिष्यति सर्वथा हि
बलवाहनो नरपतिरशेषमपि त्रिभुवनं हन्यात्किमुत मामल्पसत्त्वं किमुत बहुना भवानेव
ं ममोपायं वद यथा विवाहे श्रेयो भविष्यति रामश्च जामाता भविष्यति ॥ ८७ ॥

† आर्षोऽत्र लकारव्यत्ययः ।

१ ट. प. 'द मूर्तये जं' ।

शंभुरपि तथा करोमीत्युवाच राम एव नाथः सीताया भविष्यति रामं च कृत्वा स्वस्त्य करिष्यामि गृहाणाजगवं धनुरिदम् ॥

राजोवाच—

किमनेनाजगवेन धनुषा स्वयंवरे सीतां रामं प्रापय ॥

शंभुरुवाच—

इदं धनुरसज्यं मे यस्तु सज्यं करिष्यति । तस्मै देया मया सीता प्रतिज्ञामेवमाचर ॥
इत्येवमुक्त्वा भगवान्गणैरन्तर्दधे हरः । अथाऽऽदातुं धनू राजा न शशाकातियत्नतः ॥

अथोल्वलं शतसहस्रगजबलं समाहूय गृहाणेत्युवाच ॥

स चापि मातुलं नत्वाऽट्टहासं कृत्वोत्लुत्य धनुर्द्वाभ्यां कराभ्यामुद्दधार जानुपर्यन्तम् ॥

मातुलो मारीचः श्रुत्वैकाकी विप्रवेषं कृत्वा विदेहमयाचत वैश्वदेवान्ते प्राप्तमतिथिमाम

राजोवाच—

स्वागतं भो इदं ब्रह्मन्नासनं निषीदेति ॥

स चातिथिस्तथेत्युक्त्वा निषसाद ॥

अथ राजा जलमादाय पादौ प्रक्षाल्य गन्धपुष्पाक्षतैरभ्यर्च्य महार्जं तस्मै निवेद्य भोजन प्रार्थयामास ॥

स चापि तदन्नं षड्रसोपेतं सौवर्णभाजनगतमीक्षमाण इवेतस्ततो विलोकयामास ॥

तस्मिन्नेवावसरे सीता पद्मकिञ्जल्कप्रभेषदा रुणवसनं बिभ्रती नीलकुटिलकुन्तलैश्चलद्भिर् मनांस्याकर्षयद्भिरिदं प्रेक्ष्यमाणदृष्टिभ्रमकलैरिव स्त्रीणां चित्तमीदृशमिति दर्शयद्भिरिवोपशो तल्ललाटानङ्गचापसुभ्रूः पद्मपत्रारुणविलोचना तिलप्रसूननासा मृदुस्निग्ध(ग्धा)रोमशकपोला न्तरारक्तोष्ठा रक्तासनमणिकणिकानिभदाडिमीदशना जपा[*रुणाधराऽतिशोभितचुबुका शु वर्णा समदीर्घकण्ठाऽतिमांसलवक्षःपीनोद्भिन्नकुचकुड्मलाऽनेकहारो]पशोभिता सुभगाकारा तिमांसलबाहुलता मुग्धायतसमानाङ्गुलिशिखा पद्मारुणपल्लवा विविधबहुरत्नाङ्गुलिभूषणा सु ग्राह्यमध्या सुरोमराजिगम्भीरनाभिः पृथुजघना करिकरोरुस्तूणीरजङ्घा सुपादकमला नूपुरा पादविभूषणा पादाङ्गुलिभूषिता विकसितसौगन्धिकं विदधती भुञ्जानमारीचस्य पुरतश्चा गता ॥

वीक्ष्यासावचिन्तयदेनां कथमपहरामि कथमालिङ्गामि कथमन्यद्यत्किंचित्करोमीत्येवमव मलभमानस्तूष्णीमेव विनिर्गतः ॥

अथ देवधनुःसज्जीकरणाय यतमानाऽहंपूर्विकया विद्यमाना(?) अन्योन्यतिरस्कारेण मह प्राप धनुरुत्तमं प्रान्तद्वयापारं नावनमयितुं शशाक ॥

अथ सूर्यो धनुरादाय नमयन्नेव निपपात ॥ १
बायुर्बलवतां श्रेष्ठो जग्राहाजगवमथ स्वेनैव करेणोत्कर्षयन्नधः पपात ॥ १
धनुश्च वायोरुपरि पपात ॥ १
अहसंस्तदा सर्वे ॥ १

---

* धनुश्चिह्नान्तर्गतः पाठः ख. ङ. च. छ. ट. ढ. प. पुस्तकस्थः ।

---

१ अ. °द्भिरन्तं प्रे° । ञ. °द्भिरितं प्रे° ।

एतस्मिन्नन्तरे तुरगवरमारुह्य बाणासुरः सहस्रबाहुरेकानेकशिरोभिर्दैत्यैः परिवृतः प्रह्लादस-
[...]ो विदेहपुरीमाजगाम ॥ १०४

अथ स्वविभूषणोद्भासितां दिशां कुर्वन्स्वतेजसाऽप्ययशसो देवताः कुर्वन्नानाविधगीर्ति
[...]न्यङ्गुलमात्रेण शक्तो विरराम ॥ १०५

प्रह्लादो बलिश्चैव(द)धावाते अथ विरेमतुः ॥ १०६

अथ राक्षसेषु तूर्ष्णीभूतेषु राजानोऽतिबलिनः समागता ज्याबन्धाशक्ता अपसृत्य तस्थुः १०७

अथ ब्राह्मणाः समागताः ॥ १०८

अथ विश्वामित्रो धनुरादायैकाङ्गुलपर्यन्तं सज्जं कृत्वा विरराम निवृत्ताश्चापरे ॥ १०९

अथ दिनमात्रे धनुषि तूर्ष्णींभूते राघवः सहानुजैरागत्य धनुर्निरीक्ष्योपास्पृशत् ॥ ११०

अथ राजकुमाराः शतशः समागताः सर्वाभरणभूषिता धनुर्दृष्ट्वा पस्पृशुर्न च चालन-
[...]क्षमाः ॥ १११

अथ दाशरथिप्रमुखाः कुमाराः समागताः ॥ ११२

अथ वेत्रझर्झरपाणयः समागमन्सर्वानेवापसारयामासुः ॥ ११३

अथ रामो लक्ष्मणहस्तं गृहीत्वा सर्वाभरणभूषितो धनुरासाद्य स्पृष्ट्वा नत्वा प्रदक्षिणीकृत्य
[...]नुरादायोद्दधार ॥ ११४

तदादानसमये सर्व एवैत्य सहासप्रूचुरत्र भग्ना महारथा इति ॥ ११५

अथ रामो धनुर्ज्यास्थानमवनमय्य धनुषि जानुं कृत्वा सज्यमेककरेणोत्पादयन्कोट्या
[...]प्रदापयत् ॥ ११६

अथ सज्जीकृतं दृष्ट्वा सर्व एव नासाग्रन्यस्ताङ्गुलयोऽभवन् ॥ ११७

रामोऽपि ज्यामनुनादयंस्तेन नादेन सर्वेषां मनांसि क्षुभितान्यासन् (न्यकरोत्) ॥ ११८

रामेण सज्जितं धनुरिति सर्वत्र वादः संजातो जनकोऽपि सीतां रामाय ददौ ॥ ११९

राजभिश्च युद्धं कृत्वा निर्जित्य स्वपुरीमगात् ॥ १२०

अथ दशरथो रामं यौवराज्येऽभिषिच्य सुखी बभूव ॥ १२१

सर्वप्रजारञ्जनाच्च रामो राजाऽनुमत इति सर्वप्रजावादोऽभूत् ॥ १२२

अथ केकयदेशाधिपतितनया सुवेषा रामं राजानमसहमाना राजानमुवाच मम वरदानावसर
[...]ि ॥ १२३

राजाऽचिन्तयत्किं देयमिति ॥ १२४

देव्युवाच—

चतुर्दश वर्षाणि रामो वनं विशतु पालयतु राज्यं भरतः ॥ १२५

राजा चानृतवचनदोषभयात्कथं कथमपि स्वीचकार ॥ १२६

अथ वसिष्ठं भावितयाऽवोचत रामो वनाय निर्गच्छत्यस्य किं वा भवेदिति विचार्य शुभाशुभं
[...] ॥ १२७

वसिष्ठो विचार्य सहर्षं राजानमुवाच ॥ १२८

गत्वा वनं निखिलदानववीरहन्ता शंभोरनेकविधपूजनमातनोति ।
सीतावियोगकुपितः कपिसेनया च तीर्त्वोदधिं दशमुखं च निहन्ति रामः ॥ १२९

आगम्य राज्यं रघुनन्दनोऽपि बहूनि वर्षाणि समातनोति ।
प्रशस्तकीर्तिर्निखिलेऽपि लोके शर्वेण देवेन चिरं न्यवात्सीत् ।
सुपुत्रयुक्तो बहुयज्ञयाजी परिवृढः सर्वगुणाधिकश्च ॥ २

इति वसिष्ठवचनं श्रुत्वा दशरथो रामगुणाननुस्मरन्नित्युवाच श्रेयो मे मरणं रामस्य निर्गमनेति।

अथ रामो मातरं पितरं गुरुं च वसिष्ठं पितृपत्नीर्नमस्कृत्य वनाय जगाम ॥ १३०

अथोपवने दिनमेकं स्थित्वा जटाः कारयित्वा वल्कलं वाससं धृत्वैकोपवीती कृतदन्तशुद्धि-
रेकेनोपवीतेन जटा बद्ध्वा भस्मोद्धूलितसर्वाङ्गो भसितनिष्ठुरकायो मुक्ताफलदामा मणिव्यत्यस्त-
रुद्राक्षमालामुरसि दधानोऽल्पभूषणाधिभूषितसीतासहायो लक्ष्मणानुचरो विवेश वनान्तरम् १३१

अथानेकराक्षसांस्तस्मिन्निजघान भवानिव निखिलं चकार ॥ १३२

सीतापहरणादि निखिलमपि भवन्तो(तो) यथा तथाऽस्याथ सुग्रीवाश्रममृष्यमूकपर्वतं रामो
जगाम ॥ १३३

निबिडच्छायाचूतवृक्षमासाद्य लक्ष्मणसहायः परिश्रयमकल्पयत् ॥ १३४

वृक्षे तु धनुषी आरोप्याऽऽसीनलक्ष्मणाङ्के शिरः कृत्वा हरिचर्मशय्याशयनो लक्षितां गीतिं
शृण्वन्वृक्षफलं निरीक्षमाणो वानरमेकं मणिकुण्डलं हेमपिङ्गलं सुदृढबद्धमौञ्जीकौपीनमच्छोपवी-
तिनमतिचञ्चलफलमादायाऽऽत्मनि विक्षिपन्तं पुष्पमञ्जरीश्च किरन्तं गानमनुकुर्वन्तं व्यजनेन रामं
वीजयन्तमारुह्य शाखामपि तथा वीजयन्तमाबद्धचूतफलमात्रं रामो वीक्ष्य लक्ष्मणमभाषत लक्ष्मण
कोऽयं कपिरिति ॥ १३५

लक्ष्मणोऽपि न जान इत्युवाच ॥ १३६

अथ रामः समाहूय कस्य त्वं किं नामेत्यपृच्छत् ॥ १३७

स च सुग्रीवस्य हनुमानित्युवाच रामं नत्वा सुग्रीवमेत्य नत्वा देव नारायण इवाप्रति
पुरुषो युवा मेघश्यामो जङ्घाजानुबाहुरतीव यशस्वी सूर्यसंकाशेन सहापरेण त(क)रेणवाऽऽस्तेऽ
रचूतच्छायाधःसंस्थितौ सर्वलक्षणसंपन्नौ राजपुत्रौ दृष्टावुक्तश्च ताभ्यां सुग्रीवाय निवेदयेति
तत्त्वयि निवेदितम् ॥ १३८

अथ सुग्रीवः सत्वरमुत्थाय पादसलिलार्चनादिद्रव्यमादाय पादप्रक्षालनादिकं कृत्वा फलानि
समर्प्य व्यज्ञापयत्कौ युवां किमर्थमागतौ राजपुत्रौ तपस्विनाविति ॥ १३९

सुग्रीववचनमाकर्ण्य लक्ष्मणेनाभाषयद्रामः । दशरथतनयावावां रामलक्ष्मणौ दुष्टनिग्रहशिष्ट-
परिपालनाय वनं गताविति ॥ १४०

अथ सुग्रीवो युवयोरुपकारमपका(रप)रं कार्यमस्तीति लक्ष्यते । अन्यथा सेनासमेतावागमिष्यत

लक्ष्मणोऽस्ति कार्यान्तरम् । अमुष्य भार्या केनापहृता न ज्ञाता तामन्वेष्टुमागतौ तदेवाऽऽवयोः
कार्यमन्यदानुषङ्गिकं तदर्थमपि जलधिं तरावः। अपि पातालं प्रविशावः। अपि नाकं साधयावः।
अपि महेन्द्रं पातयावः । अपि बलिनं हनाव । किमपि कुर्वहे ॥ १४२

सुग्रीव उवाच—

(वो) रावणेनापहृतया कदाचिद्ध्रियमाणागतया[1] विभूषणानि कानिचित्परित्यक्तानि गतानि
मया संगृहीतानि तानि दर्शयामीत्याभाष्य रामं मन्दिरमागमय्य दर्शयामास ॥ १४३

---

१ ट. प. °चिद्ध्रिमानमत° ।

